# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२५ वर्षे १ अङ्कः

वै० संवत् २०२७

प्रकाशनतिथिः

ज्येष्ठपूर्णिमा, वै० सं० २०२७
( जून, १९७० ई० )

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# विषयानुक्रमणिका





CC-0. Sampurnanand University Collection. Digitized by eGangotri

# सम्पादकीयम्

पञ्चविंशे वर्षे पदन्यासं विदधती सारस्वतीसुषमा आत्मनस्तारुण्यसौन्दर्येण मनीषिणां मनोरमणाय प्रथमेऽङ्के यान् ललितलेखान् सन्निवेश्य स्ववपुषः प्रकाशनाय प्रवृत्ता, तेषां सारं संक्षिप्तो मे महान् मनस्तोषः प्रवर्तते। आशासे, सुषमायाः प्रणयिनस्तस्यां पूर्वतोऽधिकतरं स्निग्धाः स्युरिति।

## १. प्रथमो लेखः

१९६५ खिष्टाब्दे विश्वविद्यालयस्याष्टमदीक्षान्तमहोत्सवावसरे बड़ौदावास्तव्येन श्रीवदरीनाथकाशीनाथशास्त्रिमहोदयेन 'रामायणमहाभारतयोः राजनीतिः' इति विषयमाश्रित्य त्रीणि विशिष्टव्याख्यानानि प्रदत्तान्यासन्, तानि च कतिपयकारणतः पञ्चवर्षाणि 'सुषमा'-सम्पादकस्य सुलभानि नाभूवन्। साम्प्रतं महता प्रयत्नेन समासादितानि तानि प्रस्तुताङ्कस्य प्रथमलेखात्मना विदुषां समक्षमुपनीयन्ते। अस्मिन् लेखे प्राग् रामायणीया राजनीतिः, ततो महाभारतीया राजनीतिः, अन्ते द्वयोस्तुलना वर्णिता विद्यते।

रामायणीयां राजनीतिं वर्णयता शास्त्रिमहोदयेन 'नीतिमन्तरा न हि कस्यापि गृहव्यवस्थापि सुघटिता भवति' इत्यादि वदता 'व्यवस्थाया असाधारणं साधनं नीतिः' इति सामान्यतो नीतिलक्षणं सूचितम्। एतेन राज्यव्यवस्थायै राज्ञा यदसाधारणं साधनं समालम्ब्यते सा राजनीतिरिति सुस्पष्टमवद्योतितम्।

वाल्मीकिरामायणे जनपदस्याराजकत्वं विनिन्द्य राज्यसञ्चालनार्थं गुणवतो वीर्यवतो धर्मज्ञस्य कृतज्ञस्य सत्यवाक्यस्य दृढव्रतस्य चारित्र्ययुक्तस्य सर्वभूतहिते रतस्य विदुषः समर्थस्य प्रियदर्शनस्य आत्मवतो जितक्रोधस्य द्युतिमतोऽनसूयकस्य रोषे सति देवानामपि भयंकरस्य राज्ञ आवश्यकता प्रदर्शिता। एवम्भूतगुणोपेतस्यापि राज्ञो निरङ्कुशतानिवृत्तये तस्य मन्त्रिमण्डल-महर्षिमण्डल-प्रजापरिषदां वशवर्तित्वं समर्थितम्।

पितुराज्ञया राज्यं परित्यज्य रामस्य वनगमनम्, वनमधिवसता रामेण रावणजयाय वानरसैन्यसंघटनम्, प्रजानां मनोभावानुरोधेन रामेण सीताया विवासनम्, स्वे स्वे कर्मणि प्रजाजनानां दार्ढ्याय स्वकर्मविमुखस्य परकर्मप्रवृत्तस्य शम्बूकस्य रामेण निर्घृणो वध इत्येवमादिविविधप्रसङ्गोपन्यासस्य प्रजाशिक्षणप्रयोजनकत्वमिति प्रणिगदता शास्त्रिवर्येण 'राज्यव्यवस्थायां राजसत्ताऽपेक्षया जनताया अभिप्रायस्य मूल्यमधिकम्, सर्वतोभावेन प्रजाया

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रञ्जनमेव राज्यव्यवस्थाया लक्ष्यम्, परचक्रतो राज्यस्य रक्षणं प्रजानामुत्कर्षोपायस्यानवरतं चिन्तनमेव च 'राज्ञः परमो धर्मः' इत्येव रामायणीयाया राजनीतेस्तत्त्वमिति सुप्रतिपादितम्।

महाभारतीयां राजनीतिं निरूपयता शास्त्रिमहोदयेन (१) विशुद्धा राजनीतिः, (२) कूटनीतिश्चेति राजनीतेः रूपद्वयं महाभारते वर्णितमिति प्रत्यपादि। तत्र विदुरभीष्मप्रभृतिभिर्निर्दिष्टा नीतिर्विशुद्धा राजनीतिः, कणिकादिभिर्वर्णिता नीतिश्च कूटनीतिः। पाण्डवैराद्या नीतिः कौरवैश्च द्वितीया नीतिः समाश्रिता। द्वितीयस्या नीतेः समाश्रयणेनैव धृतराष्ट्रः पाण्डुना न्यासीकृतं राज्यं सर्वथा स्वीयमेव कर्तुं दुर्योधनादीन् स्वपुत्रान् प्रेरयामास—

प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत।
प्रहृत्य च कृपायीत शोचेत च सहेत च॥

× × ×

वधमेव प्रशंसन्ति शत्रूणामपकारिणाम्।
सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितम्॥
दया न तस्मिन् कर्तव्या शरणागत इत्युत।
निरुद्विग्नो हि भवति न हताज्जायते भयम्॥

× × ×

पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः।
रिपुस्थानेषु वर्तन्तो हन्तव्या भूतिमिच्छता॥
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दारुणम्।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम्॥

इत्येवमादीः कणिकनीतीरुपाश्रित्यैव धृतराष्ट्रेण तत्पुत्रैश्च पाण्डवानां पराभवाय लाक्षागृहदाहादयोऽनेके गर्हिता उपाया अनुष्ठिताः।

युधिष्ठिरादयः पाण्डवा विशुद्धां राजनीतिमाश्रित्यैव सर्वदा स्वोत्कर्षाय प्रयतमाना बभूवुः। अत एव ते द्यूते पराजितास्त्रयोदशवर्षाणि वनवासं गुप्तवासं च शान्तभावेन स्वीचक्रुः; ग्रामपञ्चकेनैव तुष्यन्तः कौरवैः सन्धये सन्नेहुः।

इत्थं महाभारते द्वयोरेव राजनीत्योः समाश्रयणं वर्ण्यमानमस्तीत्यनेकविधप्रसङ्गोपन्यासेन शास्त्रिवर्येण प्रतिपादितम्।

अन्ते निजं वक्तव्यमुपसंहरता शास्त्रिमहोदयेन रामायणीयाया राजनीतेर्महाभारतीयया राजनीत्या तुलना वक्ष्यमाणेन रूपेण कृता।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तथा हि यथा महाभारते कणिकेन कूटनीतिर्वर्णिता, सा च कौरवैराश्रिता पाण्डवैश्च प्रायेण समुपेक्षिता; तथैव रामायणे जाबालिना कूटनीतिर्वर्णिता, सा च रावणप्रभृतिभी राक्षसैरङ्गीकृता, रामेण तद्भ्रातृभिश्च परित्यक्ता। कणिककूटनीत्या प्रभावितैःकौरवैर्विविधैश्छल-च्छद्मादिभिः पाण्डवानां राज्यं स्वात्मसात्कर्तुं प्रयत्नोऽनुष्ठितः। परं रामेण पितुर्दशरथस्य प्रतिज्ञारक्षणावसरदानाय, विमातुः कैकेय्या मनस्तोषार्थं च न्यायप्राप्तमपि राज्यं परित्यक्तम् भरतेन च रामस्य वनवासकाले गुरुजनैरनुमतमपि तन्न स्वीकृतम्। रामायणीयायां राजनीतौ वचनपालनं सर्वथाऽनिवार्यमविद्यत, परं महाभारतीयायां राजनीतौ विकल्पेन, अपवादेन प्रातिनिध्येन च निर्वाह्यममन्यत। यथा 'गाण्डीवनिन्दको हन्तव्य' इत्यात्मनो निश्चयोऽर्जुनेन गाण्डीवनिन्दकं युधिष्ठिरमहत्वा केवलमधिक्षिप्यैव संरक्षितः।

इत्थं रामायणमहाभारतराजनीत्योर्धर्मस्य प्राधान्यम, दण्डनीतेर्महत्त्वं परचक्रचिन्ता, राज्यस्य रक्षणव्यवस्था, व्यवहारावलोकने धर्मशास्त्राणामाश्रयः, यथाकालं कुटिलनीतेराश्रयणम्, सर्वस्यास्य समानत्वेऽपि महाभारतस्य राजनीतौ रामायणस्य राजनीत्यपेक्षया कुटिलनीतेरधिकं प्राधान्यमासीदिति शास्त्रिवर्येण सप्रमाणं प्रतिपादितम्।

## २. द्वितीयो लेखः

एष लेखः शान्ता दशरथात्मजा ?' इति विषयमाश्रित्य डॉ० अशोकशास्त्रिणा लिखितः। लेखस्य संक्षिप्तमभिमतं तावदित्थम्—

वाल्मीकिरामायणं पाठभेदेन दक्षिणभारतीयरामायणमुत्तरभारतीयरामायणं चेति द्विधा प्रसिद्धम्। तत्र दक्षिणभारतीयरामायणानुसारेण शान्ता अयोध्यापतेर्दशरथस्य सुहृदोऽङ्गाधिपते-र्लोमपादस्य औरसी कन्या, ऋष्यश्रृङ्गर्षेः पत्नी। उत्तरभारतीयरामायणानुसारेण सा दशरथस्य औरसी कन्या, लोमपादस्य तु दशरथप्रदत्ताऽपत्यकृतिका कन्येति। उभयो रामायणयोः शान्ताविषयकेणानेन मतभेदेन पाठकानां चेतसि जिज्ञासेयं स्वभावतः समुदेति 'किमत्र तथ्यम्' इति। डॉ० अशोकशास्त्रिणाऽस्मिन् विषयेऽनुसन्धानपूर्वकं सप्रमाणं यत्साधितं तदेवम्—

शान्ता न अयोध्यापतेर्दशरथस्य कन्या, यदि सा तस्य प्रथममपत्यमभविष्यत्, तदा रामायणे तज्जन्मनोऽयोध्यायां तज्जन्मोत्सवस्य च वर्णनं नूनमभविष्यत्। किं च यदा सा प्रथममपत्यं दशरथस्य, तदा साऽपुत्रकेण तेन लोमपादाय कथं दीयेत; कथं वा पुत्रेष्टिसमये ऋष्यश्रृङ्गेण सार्धमयोध्यायामागमने सा दशरथेन, राज्ञीभिः, पौरैः, राजभृत्यैश्च राजकन्येव सस्नेहं नाद्रियेत, कथं वा कयाचिद् राज्ञ्या औरसी कन्येव नोपलाभ्येत। परमित्थं किमपि रामायणे

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नोपलभ्यते । अतः सा न अयोध्याराजस्य तनया, अपि त्वङ्गाधिपतीनां राज्ञां वंशे जातस्य चित्ररथतनयस्य लोमपादापरनाम्नो दशरथस्य कन्या । कालक्रमेणाङ्गदेशीयस्य दशरथस्य विस्मरणेनायोध्यापतेर्दशरथस्य च प्रसिद्धतरतयाऽविस्मरणेन च शान्ताऽयोध्यापतेर्दशरथस्यैव कन्येति लोकेन गाढमग्राहि । लोकगृहीतश्च पक्ष एव उत्तरभारतीये रामायणे तदुपजीविषु ग्रन्थान्तरेषु चोपनिबद्धोऽभूत् । रामायणस्य कुम्भकोणीये संस्करणे—

इक्ष्वाकुवंशजो राजा भविष्यति महायशाः ।
नाम्ना दशरथो नाम धीमान् सत्यपराक्रमः ॥
सख्यं तस्याङ्गराजेन भविष्यति महात्मनः ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥

इति पाठ उपलभ्यते ।

अत्र द्वितीयपद्ये 'तस्य' शब्देनायोध्यापतेर्दशरथस्य ग्रहणम् । 'अस्य' शब्देन च सान्निध्यादङ्गराजस्य ग्रहणम् । अस्य सर्वस्य विवेचनस्य बलादयं निष्कर्षो निर्गलति यद् दक्षिण-भारतीयरामायणस्येदं कथनमेव प्रामाणिकं यत् 'शान्ता' न अयोध्यापतेर्दशरथस्य कन्या, अपि तु तन्मित्रस्य लोमपादापरनाम्नो दशरथस्यैवेति ।

## ३. तृतीयो लेखः

अयं लेखः 'कातन्त्रीयो धातुपाठः' इति शीर्षकेण श्रीजानकीप्रसादद्विवेदेन लिखितः । अस्मिन् लेखे 'आचार्येण शर्ववर्मणा कातन्त्रव्याकरणस्य स्वतन्त्रो धातुपाठः प्रणीत आसीद्, इति पूर्णानुसन्धानपूर्वकं सप्रमाणं प्रतिपादितम् । अत्रोपन्यस्ता युक्तयस्तावदित्थम् ।

दिवादेर्यन् (३।२।६७), नुः श्वादेः (३।२।६८), तनादेरुः (३।२।६९), ना क्र्यादेः (३।२।७०)—एतेषु कातन्त्रसूत्रेषु दिवादयो गणा निर्दिष्टाः । एष निर्देश आचार्यान्तरप्रणीतं धातुपाठमुपजीवतीति कथनं न युक्तं भवितुमर्हति, पूर्वतनेभ्यो व्याकरणेभ्योऽस्य व्याकरणस्याल्प-त्वात् । पाणिनीयो धातुपाठः काशकृत्स्नीयो धातुपाठश्चापि नैतन्निर्देशोपजीव्यतया स्वीकर्तुं शक्येते, ताभ्यामत्र क्रमवैषम्यविसंवादयोर्दर्शनात् ।

शर्ववर्मणा विरचितो धातुपाठो यद्यपि साम्प्रतं नोपलभ्यते, तथापि कातन्त्रसूत्रेषूक्तेषु गणानां निर्देशात् तत्सत्त्वमनुमीयते । स्वीयधातुपाठस्य वृत्तिरपि तेन रचितेति केषाञ्चिदुत्प्रेक्षणं तु प्रमाणाभावादनादेयम् ।

दौर्ग एव धातुपाठस्तिब्बतदेशे शार्ववर्मिकधातुपाठतया व्यवह्रियत इति गुरुपद-हालदारोक्तिस्तु डॉ० ब्रूणोलिबिश-वचनमात्राश्रिता ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कातन्त्रधातुपाठस्य काचन वृत्तिर्दुर्गाचार्येण रचितेति तु 'मनोरमायाः' (खर्द दशने २०) इत्यंशाश्रिताद् 'दन्दशनमिह दन्दशूककर्तृका क्रियाऽभिधीयत इति दुर्गसिंहव्याख्यानाद् दन्दशन इति पाठोऽनुमीयते' इति वचनात् प्रमाणयितुं पार्यते ।

'पवर्गपञ्चमादिरिति त्रिलोचनः', ( मुछ प्रमादे ६० ) 'नायमस्तीति दुर्गत्रिलोचनौ', ( वेल्ल गतौ १८० ) इत्यादिमनोरमावचनबलेन नूनमिदं शक्यते वक्तुं यत् त्रिलोचनेन कातन्त्रधातुपाठस्य किमपि व्याख्यानं रचितमासीत् ।

'मुस खण्डने' इति धातोर्व्याख्यानप्रसङ्गे 'आत्रेयस्तु कातन्त्रे मूर्धन्यान्तोऽयम्' इत्येवं-विधात् सायणाचार्यनिर्देशात् कातन्त्रधातुपाठस्य काचन वृत्तिर्विरचिता आत्रेयेणेति युधिष्ठिर-मीमांसककल्पनं नोचितम् . तादृशनिर्देशस्य वृत्तिग्रन्थाभावेऽपि तन्मतमात्राश्रयेण सम्भवाद् ।

रमानाथस्य मनोरमानाम्नी वृत्तिर्न शार्ववर्मिकधातुपाठाश्रिता, किन्तु धातुपाठान्तरा-श्रिता—इत्येतन्मतसमर्थने लेखकेनोपन्यस्ता हेतवो लेखादेव विज्ञेयाः, नूनं ते मतमिदं प्रमाणयितुं शक्ताः ।

यं कातन्त्रीयं धातुपाठं रमानाथो व्याख्यातवान्, तत्र जुहोत्यादेरदादिगण एव पाठान्नवैव गणा धातूनामुपलभ्यन्ते । यथा संगृहीतं गुरुनाथशर्मणा—

भ्वद-दिव-षु-तुदाद्याश्च रुध-तन-क्री-चुरादयः ।
इमे नव गणा ज्ञेया धातूनां शार्ववर्मिके ॥

एषु गणेषु गुरुनाथोक्ता अन्तर्गणास्तेषां प्रयोजनानि च लेख एव द्रष्टव्यानि ।

केषाञ्चिद् धातूनामर्थभेदान् तन्निष्पाद्यप्रयोगभेदाँश्चाश्रित्य कतिपये रमणीया विचारा लेखकेन रमानाथरचिताया मनोरमाया आश्रयेण लेखेऽस्मिन्नुपन्यस्तास्ते पाठकैस्तत्रैव पठनीयाः ।

## ४. चतुर्थो लेखः

एष लेखः 'व्यक्तित्वविकासे बाधिका हीनभावना' इत्यर्थकेन शीर्षकेण श्रीश्याम-सुन्दरमिश्रेण लिखितः । अस्मिन् लेखे मनोवैज्ञानिक्या दृशा देहेन्द्रियमनोबुद्धिप्रतिभागुणानां समवायविशेषं व्यक्तित्वरूपेण परिभाष्य तदीयः सर्वाङ्गीणो विकासो मनुष्यस्याभ्युदयसाधनतया स्वीकृतः । व्यक्तित्वस्य विकासे बाधकान्तरैः सह हीनभावनानां तद्बाधकत्वं लेखेऽस्मिन् विशेषतो विवेचितम् । का नाम हीनभावना ? के च तस्या हेतवः ? काश्च तद्विधाः ? कथं तासां

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समुद्भवः ? कया रीत्या तासां व्यक्तित्वविकासे बाधकत्वम् ? के च तन्निराकरणोपाया ? इत्यादयो विषया लेखेऽस्मिन् सम्यग् विशदीकृताः ।

प्रस्तुतस्याङ्कस्य भूयान् भागो विशिष्टव्याख्यानेन परिगृहीतः, अतो लेखान्तरैरत्र स्वल्प एवावकाशो लब्धः, फलतयाऽनेकेषामुत्तमोत्तमलेखानामस्मत्सविधे समुपस्थितानामपि प्रकाशनमस्मिन्नङ्के सम्भवं नाभूदिति तदर्थं लेखकान् पाठकांश्च क्षमां याचमानो विनयेन विनिवेदयितुं कामये यदग्रिमेऽङ्के तेषां लेखानां प्रकाशनं कर्तुमवश्यं प्रयतिष्यत इति । पूज्यस्वामिश्रीकरपात्रमहाभागैः विगतदीक्षान्तमहोत्सवावसरे प्रदत्तानि त्रीणि विशिष्टव्याख्यानान्यपि न चिरमेव 'सुषमायाः' स्वतन्त्रेऽङ्के प्रकाशयिष्यन्त इति तत्स्पृहयालवो मनीषिणः सादरं सूच्यन्ते ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२५ वर्षः } ज्येष्ठपूर्णिमा, संवत् २०२७ { १ अङ्कः

# रामायणमहाभारतयोः राजनीतिः*

श्रीवदरीनाथः का० शास्त्री, वड़ौदा ( गुजरात )

**उपक्रमः**

अथोऽत्र विश्वविदिते वाराणसेयसंस्कृतविश्वविद्यालये सकलभुवनकामितरामराज्यनीति-विषये व्याख्यास्यतो मम मानसे समुद्भवति प्रहर्षाङ्कुरः कश्चिदव्यक्तः संक्षोभश्च । विश्वनाथ-नगरी भारतवर्षस्य विद्यानगरीत्यन्वर्थनामधेया व्याख्यानस्थलम् । भूमितले सकलपार्थिवानां मौलिमणेः पृथुवरयशःप्रसरपावितनिखिलजनान्तर्गतस्य वाल्मीक्यादिमहामुनि-कविताविषयस्य अद्याप्यम्लानकीर्तेर्विष्णोरंशभूतस्य रामस्य राजनीतिर्विषयः । रामायणे राजनीतिः, सा रामस्यैव राजनीतिः ।

यद्यपि रामायणराजनीतिरिति शब्देन विषयः प्रस्तूयते, तथाऽपि रामराजनीतिरेव वर्णनीया स्यात् । क्वचिद् दशरथकैकेय्यादीनां कथास्तास्त्वङ्गभूता एव । अतो विषयोऽपि रमणीयः पावनश्च । इदमप्यन्यत् प्रमोदपदं यत् पारिषद्या अपि भूयस्सु शास्त्रेष्वतिजटिलयुक्ति-प्रयुक्तिकर्कशेषु कृतपरिश्रमाः संस्कृतविश्वविद्यालयस्य न्यायविभागाध्यक्षाः प० श्रीबदरीनाथशुक्ल-शास्त्रिप्रभृतयो महाविद्वाँसः । उपस्थितिश्चात्रोपकुलपतेरपि प्रमोदं तरलयति ।

---

* १९६५ खिष्टाब्दे वाराणसेयसंस्कृतविश्वविद्यालयस्याष्टमदीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझा-प्रवचनमालायां वडोदास्थैः श्रीमद्भिर्बदरीनाथकाशीनाथशास्त्रिमहोदयैः प्रदत्तं विशिष्टव्याख्यानम् ।

—सम्पादकः

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एतच्च निखिलं यथा हर्षं जनयति तथा विदितवेदितव्यानां विश्वविदितवैदुष्याणां सभास्ताराणां पुरो मितं पचमेधाधनः किमहं वक्ष्यामीति संक्षोभोऽपि। तथाप्ययं ममानुभवः श्रोतारो वक्तृबुद्धेरनुग्राहका भवन्ति। क्वचिद् विवक्षितोऽपि सुचिन्तितोऽप्यर्थः सङ्कोचं शिथिलताञ्चापद्यते, क्वचिच्चाचिन्तितोप्यर्थोऽकस्मादेव वाचि विकसितो भवति। मन्ये, एष श्रोतॄणां सदस्यानामेव प्रभावः।

अत्र व्याख्यानत्रये एक एवास्ति विषय उद्दिष्टो रामायणमहाभारतयोः राजनीतिः। तत्र पूर्वं रामायणराजनीतिविषयम्, ततश्च महाभारतराजनीतिविषयं वर्णयिष्यामि। एतानि व्याख्यानानि त्रिषु दिवसेषु व्याख्यातव्यानि। तत्र दिनविभागप्रयुक्तव्याख्यानविभागोऽस्तु।

प्रथमं तावद् रामायणीया राजनीतिः प्रस्तूयते। नीतिमन्तरा न हि कस्यापि गृहव्यवस्थाऽपि सुघटिता भवति। गृहेऽपि सुव्यवस्था यदि दृश्यते, स नीतेरेव प्रभावः। यश्च नीतिं नाद्रियते, स व्यवस्थां नाद्रियते। नीतेरनादरोऽपि नीतिरेव। व्यवस्थावन्तो यथा कुत्रापि नीत्युल्लङ्घनं मा भूदिति निपुणं निरीक्षमाणा एव प्रवर्तन्ते, तथाऽव्यवस्थां समीहमाना अपि क्वचिदपि नीत्यनुसरणं मा भूदिति दत्तावधाना एव प्रवर्तन्ते। नीत्यननुसरणमपि नीतिरेव तेषां भविष्यति। यथा—

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा।
अव्युत्पन्नमतिः कृतेन न सता नैवासताऽप्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः पामरः॥ इति।

अत्र 'सन्तः' इति बहुवचनान्तसत्पदेनाजहल्लक्षणया रामस्य निर्देशोऽक्लेशेन ज्ञायते। 'सच्चरितोदयव्यसनिनः' इत्यनेन पितुराज्ञावशाद् वनगमनं तथैव बुद्ध्यते। 'प्रादुर्भवद्यन्त्रणाः' इत्यनेन वनवासक्लेशा लक्ष्यन्ते। 'सर्वत्रैव जनापवादचकिताः' इत्यनेन सीताविवासनं तथैव ज्ञायते। उत्तरार्द्धे 'जनः पामरः' इति रावणस्य निर्देशः, जनः पामर इत्यत्राकारप्रश्लेषे 'अपामर' अरम्—अग्रम्। अपाम्—अरे अग्रे—लङ्कायां वसन्, तात्स्थ्यसम्बन्धेन अपामरो रावण इत्यादि यथायथमूह्यम्। कृतेन सताऽथवाऽसता न आकुलः समग्रामपि लङ्कां रामेण घातितवान्। अत्र 'धन्यो' इत्यत्राप्यकारप्रश्लेषेणाधन्य इत्यर्थः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# प्रथमं प्रवचनम्

रामायणमतिप्राचीनमार्षं महाकाव्यम्। तस्य रचनाकालविषये न वक्ष्यामि। चतुर्द्धा कालविभागः, कृतं त्रेता द्वापरं कलिश्चेति। अयं विभागो युगशब्देनोच्यते। रामराज्यं तु त्रेतायुगवर्त्यासीत्। रामायणकथा त्रेतायुगकालिकीत्यनुक्तसिद्धम्। कृतयुगे प्रजानां स्वयं-शासितत्वात् तत्र व्यवहारे नाधिको राजसत्ताया हस्तक्षेपः।

मनुनाप्युक्तम्—

चतुष्पात् सकलो धर्मः सत्यञ्चैव कृते युगे।
नाधर्मेणागमः कश्चिन्मनुष्यान् प्रतिवर्तते॥

चत्वारस्तपोज्ञानयज्ञदानानि धर्मपादाः।

(मनुस्मृतौ अ.१.८१)

अग्रे—

इतरेष्वागमाद् धर्मः पादशस्त्ववरोपितः।
चौरिकानृतमायाभिर्धर्मश्चापैति पादशः॥

(मनु० आ० १, श्लो० ६)

तदग्रे मनुना चातुर्वर्ण्यस्य धर्मा उपदिष्टाः। त्रेतायुगस्य कृतयुगसन्निकृष्टकालवर्तित्वाज्जना धर्मपरायणाः स्युरेव। तत्र सुव्यवस्थितराजसत्तासञ्चालनाय संविधानकानामपेक्षितानामपि नेदानीमुपलब्धिः।

यथा यथा संक्षोभविक्षोभा अनुभूयन्ते, तथा तथा संविधानकानि परिवर्त्यन्त इति वयं पश्यामः। रामराज्यकालेऽपि अव्याप्त्यतिव्याप्त्यादिरहितराज्यव्यवस्थानियमनदर्शनेन भवेदेवाश्चर्यम्, संविधानकाऽभावेऽपि कथमेवंविधा व्यवस्थेति। यद्यपि तानि संविधानकानि पत्रारुढानि नासन्, तथाऽपि प्रजानां स्थितिं ज्ञात्वा राजव्यवहारमवलोक्य रामायणे सर्वोत्तमानि संविधानकानि ज्ञातुमनुमातुञ्च शक्यन्ते। राज्यरक्षार्थमश्वगजादिचतुरङ्गवती सेना, नगररक्षणार्थं दुर्गप्राकारपरिखायन्त्रायुधादिनिवेशनव्यवस्थार्थं प्रकृतिमण्डलरचना। तत्र प्रकृतिमण्डले सुयोग्यानां व्यक्तीनां विनियोजनं राजकुटुम्बातिरिक्तानाम्, समये समये धर्ममुपदेष्टुं निःस्पृहाणामृषीणां मण्डलमित्यादिव्यवस्था सुव्यवस्थितां राजनीतिं स्पष्टं प्रदर्शयति।

मन्वादिस्मृतीनां प्रामाण्यं सर्वथाऽभ्युपगतमासीत्, तेन पृथक् संविधानकाभावेऽपि राज्यव्यवस्था सुघटिताऽऽसीत्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अद्यत्वे स्पृहयामो वयं रामराज्याय विश्वविदिताय। कश्चासीत् स विशेषो यदतीतेषु परस्सहस्रेष्वपि संवत्सरेषु न वयं विस्मरामस्तस्य राज्ञो रामस्य ?

राजा नाम कश्चिच्छासिता। शासनमावश्यकं चेच्छासितुरप्यावश्यकता पादलग्ना भवति। परपीडा-परोद्वेगजनकानि कार्याणि यदि प्रजाः स्वयमेव न कुर्वन्ति, तदा दण्ड्याभावाद् दण्डनीतिर्निरर्थिकेव स्यात्। यदैव तु स्वार्थमेव सकलं जगत्, सर्वाऽपि सृष्टिः, सर्वाणि सुखानि, सर्वांश्च सम्पत्तय इत्येवमेव चिन्तनशीलाः प्रजा भवन्ति; तदैव स्थानं लभन्ते परपीडाजनकानि कार्याणि विविधाश्च विक्षोभाः।

यदि प्रजा एवयदात्मनोऽहितम्, तत् परस्य न समाचरेत्, इत्येव भावयन्ति, तदा न ह्यपकृत्यानां विक्षोभाणां वाऽवकाशः। दण्डनीतेरपि नाऽवकाशः।

किन्तु न हि सर्वेषां समाना प्रकृतिः। यदि कश्चित् परोद्वेगजनककार्याय सन्नह्येत, तदा दण्डनीतिर्दुर्वारा भवति।

प्रजानां प्रकृतेरसमानतां दृष्ट्वैव सर्वेषां देवानामंशै राजा निर्मितः। अत एव श्रीमद्भागवत उक्तम्—

अलक्ष्यमाणे नरदेवनाम्नि
रथाङ्गपाणावयमङ्ग लोकः।
तदा हि चौरप्रचुरो विनङ्क्ष्य-
त्यरक्ष्यमाणोऽविवरूथवत् क्षणात्॥

अग्रेऽपि—

तदार्यधर्मश्च विलीयते नृणां
वर्णाश्रमाचारयुतस्त्रयीमयः।
ततोऽर्थकामाभिनिवेशितात्मनां
शुनां कपीनामिव वर्णसङ्करः॥

वाल्मीकिरामायणे राज्ञामावश्यकतेत्थं प्रदर्शिता—

नाराजके जनपदे विद्युन्माली महास्वनः।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा॥

इत्यादि त्रिंशच्छ्लोकैः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अराजके जनपदे पुत्रः पितुर्वशे न वर्तते, भार्या वा पत्युर्वशे न तिष्ठति, शिक्षाभयाभावात्। कर्षकाः क्षेत्रेषु बीजमुष्टिं न वपन्ति, लुण्टकानां भयात्। अराजके जनपदे सत्यं न भवेत्। द्विजातयो यज्ञशीला न भवन्ति। तथा नटनर्तकगन्धर्वा उत्सवाश्च न स्युः। लब्धप्रयोजना व्यवहारिण इतिहासपुराणादिकथाविमुखा भवन्ति। राजनि सति कृषिगोरक्षजीविनो धनवन्तः सुरक्षिताः सन्तो विवृतद्वाराः शेरते। अराजके जनपदे तु चोरभयात् तेषां वृत्तिरपि विनष्टा भवति। आवृतद्वारा अपि न सुखं शेरते, इत्यादि त्रिंशच्छ्लोकैः राजसत्ताया आवश्यकता प्रदर्शिता।

यदि च प्रजा अर्थकामाभिनिवेशितात्मानो न भवन्ति सुशिक्षिताः समञ्जसतामाश्रिताः परेषामहिताय न प्रवर्तन्ते, तदा शासनं विद्यमानमपि व्यर्थमेव स्यात्। किन्तु तदाऽपि परचक्रात् संरक्षणाय राजसात्ताया अपेक्षा सुस्थितैव।

स चापि राजा यदि रक्षकत्वं परित्यज्य भक्षकत्वमवलम्बेत, कोऽन्यस्त्राता भवेत्? क्षेत्ररक्षणाय कृता वृत्तिरेव सस्यानि भक्षति, कोऽन्यो रक्षिता?

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥

इत्यादि श्रीमद्भगवद्गीतोक्तामासुरीं संपदं प्राप्ता राजानोऽपि नियमनमर्हन्ति।

यथा गृहपतिः सर्वं गृहजनं स्वस्वकार्ये विनियुङ्क्ते, नियमयति वा। सोऽपि यद्यपथे पदमर्पयितुं बद्धपरिकरो भवति गृहजनैरेव नियम्यैरपि नियमनीयो भवति।

नियामकः शासिता कीदृगपेक्षितः, तस्यापि नियमनं कीदृग् भवत्येतत्सर्वं महामुनिना वाल्मीकिना रामायण उपनिबद्धम्।

प्राकृतजनैः कृतं वर्णनं नातिश्रद्धेयं भवति। अत एव वाल्मीकिरामायणे महामुनिरादिकविर्वाल्मीकिर्भगवन्तं नारदं पृच्छति षोडशगुणयुक्तं पुमांसम्—

को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः॥
चारित्र्येण च को युक्तः सर्वभूतेषु को हितः।
विद्वान् कः कः समर्थश्च कश्चैकः प्रियदर्शनः॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥

एतदुत्तरे नारदो भगवन्तं रामं निर्दिशति । तस्य भगवतो रामस्य चरितं वाल्मीकिनोपनिबद्धं रामायणमित्युच्यते ।

कस्याऽपि राष्ट्रस्य विचार एते विषयाश्चिन्तनीया भवन्ति—

१ परचक्रम्

२ प्रजाः

३ बलम्, द्विविधम्, कोशबलं दण्डबलञ्च ।

४ प्रकृतिमण्डलम्

५ सोदर्यादि कुटुम्बम्

६ शासिता

परचक्राद्रक्षणव्यवस्था—

पुरा राजानो दिग्विजयित्वयशोलिप्सया, करादानाय, स्वराज्यसीमासंबर्धनाय वा परेष्वाक्रमणं कुर्वन्ति स्म । यथा रघुवंशे रघुर्दिग्विजयं कृतवान् ।

रामराज्यकाले रामायणे परचक्रात् प्रजानां रक्षणार्थं स्वनगररक्षणाय नगररचनाऽपि तादृश्येव रक्षणानुगुणा वर्णिता—

कपाटतोरणवतीं सुविभक्तान्तरायणाम् ।
सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः ॥
दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम् ।
वाजिवारणसम्पूर्णां……… ॥

( वा. रा., बा. स. ५ )

वाजिनश्च वारणाश्चाप्युत्तमा एव संग्राह्या इति रामायणे तेषामपि वर्णनमुपलभ्यते—

काम्बोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः ।
वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥

एते हया अयोध्यायां संगृहीता आसन् ।

तथा गजा अपि—

विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि ।
मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ इत्यादि ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सैन्यमपि राष्ट्ररक्षणार्थमावश्यकम्। वाजिवारणादीनां दण्डबलेऽपि समावेशः।

प्रजाः —

प्रजा अपि नीतिपरायणा आसन्। तेनाऽपि परचक्रभयं निःसारं भवति। बालकाण्डेऽयोध्यानिवासिनां जनानां वर्णनं दृश्यते षष्ठे सर्गे —

सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः।
मुदिताः शीलवृत्ताभ्यां महर्षय इवामताः॥

अत्रापि व्यवस्थितो राजैव कारणं स्यात्। इदृशीनां प्रजानां किमस्ति शासितव्यम्? ताः स्वयं शासिताः। राजाऽपि तासां मतं समये समये आद्रियते। यथा दशरथो रामं राज्येऽभिषेक्तुमियेष तदा—

नानानगरवास्तव्यान् पृथग् जानपदानपि।
समानिनाय मेदिन्यां प्रधानान् पृथिवीपतिः॥
ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः॥

(अयोध्याकाण्डसर्गः २)

प्रजानां परिषदमाहूय तस्या अनुमतिं पूर्वमैच्छत्—

यदिदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम्।
भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम्॥
यद्यप्येषा मम प्रीतिर्हितमन्यद् विचार्यताम्।
अन्या मध्यस्थचिन्ता तु विमर्दाभ्यधिकोदया॥

यत्र स्वज्येष्ठपुत्रयौवराज्याभिषेकेऽपि प्रजानामनुमतिरपेक्ष्यते, तद्राज्यं राजप्रजोभयशासितमिवासीत्। अथानुमतिर्नास्ति चेद् 'हितमन्यद् विचार्यताम्' इत्यपि राज्ञोच्यते। प्रजाभिः परस्परं कथं वर्तितव्यमिति तु तस्मिन् काले नासन् विधानकानि। अस्माभिरपि गृहे कथं वर्तितव्यमित्यत्र न हि कस्यचिद् गृहे संविधानकान्यवलम्ब्यन्ते। अथाऽपि आवश्यकतायां मन्वादिधर्मशास्त्राण्यासन्नेव।

रामायणे वर्णाश्रमव्यवस्था सुचारुरूपेण विकसिता दृश्यते। तेन नोपलभ्यते तत्रोद्योगविषये स्पर्धा, न चासूया। स्वस्ववर्णोचितां वृत्तिमाश्रयन्तो जनाः सुखिन आसन्। वृत्तीनां निश्चितत्वादेव न कर्महीनः कश्चिदपि जन उपलभ्यते। स्वां वृत्तिं परित्यज्येतरवृत्तिं प्रपन्नो

CC-0. Sampurnanand University Collection. Digitized by eGangotri

दण्डार्हो गण्यते । अत एव कथं जीवितव्यम् , कथमर्थः सम्पादनीय इति प्रश्नस्तस्मिन् समये नासीत् ।

रामायणे प्रजानां वर्णनमुपलभ्यते, यथा—

तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥
(बा० का० स० ६)

वर्णाश्रमधर्मोल्लेखोऽपि तत्रैव—

क्षत्रं ब्रह्ममुखं चासीद् वैश्याः क्षत्रमनुव्रताः ।
शूद्राः स्वधर्मनिरतास्त्रीन् वर्णानुपचारिणः ॥

तत्र तत्र प्रसङ्गेषु गृह्यमाणया प्रजासम्मत्या प्रजानामपरितोषस्य न किमपि कारणमासीत् । 'नाल्पसन्निचयः कश्चिदासीत् तस्मिन् पुरोत्तमे' इत्यादि श्लोकेषु निषेधमुखेन प्रजानां वैभवं वदन् महामुनिर्वाल्मीकिस्तादृशविभवसम्पन्ना एव जना आसन्निति सम्यग् बोधयति । 'आसीत्' इत्यादिपदैर्विधिमुखवर्णने तु तादृशविभवरहिता अपि केचन भवेयुरिति गम्येत । अत्र प्रजानां तादृशत्वे राजनीतिरपि कारणमिति बोधयितुमुपक्रमे—

तेन सत्यभिसन्धेन त्रिवर्गमनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥

इत्युक्त्वा चतुर्दशभिः श्लोकैः पौराणां विभवो गुणाश्च प्रदर्श्यन्ते । 'सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता' इत्यभिधाय पौराणां वैभवे राज्ञोऽपि कारणत्वं वर्णितम् । कस्यचिच्छ्रेष्ठनगरस्य श्रेष्ठानां पौराणाञ्चेतःपरं किमधिकं वर्णनं स्यात् ?

रामाभिषेकविचारणायै नानानगरवास्तव्या नागरिका आहूताः, तेन तादृशे कर्मणि प्रजानां सम्मतिरपरिहार्याऽऽसीदिति विज्ञायते । नो चेत्, तासामाकारणं रामायणे चोल्लेखो नोपपद्येत । परचक्राद्रक्षणे प्रजानामप्यैकमत्येन साहाय्यमप्यावश्यकमित्यपि लभ्यते ।

प्रकृति-मण्डलम्—

रामायणे दशरथस्याष्टौ अमात्या आसन्—

धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्धनः ।
अकोपो धर्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित् ॥
(बा० का० स० ७)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तेषां गुणा अपि निर्दिष्टास्तत्रैव—

'यशस्विनः शुचयः, अनुरक्ता राजकार्येषु नित्यशः' इति ।

येषां नामानि केनाऽपि न ज्ञातानि स्युस्ते मन्त्रिमण्डले नागृह्यन्त, अपि तु येषां यशः प्रथितं स्यात् त एव मन्त्रिमण्डलेऽगृह्यन्त ।

एवं शुचयः स्वामिकार्ये कापट्यरहिताः, अनुरक्ताश्च राजकृत्येषु स्वकार्यं परित्यज्याऽपि राजकार्येषु तत्पराः, मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः, इत्यावश्यकगुणोपेता अष्टौ मन्त्रिण आसन् ।

मनुनाप्युक्तम्—

मन्त्रिणः सप्त वाष्टौ वा प्रकुर्वीत परीक्षितान् ॥इति।

रामायणे मन्त्रिगुणनिर्देशेन केवलं मन्त्रिवंशोद्भवत्वेनैव मन्त्रित्वं सुलभं नासीत्, अपितु तादृशगुणवत्ताऽपि तेन सम्पादनीया भवति । तत्र प्रधानमन्त्री 'सुमन्त्रः' राजानम्, ऋषिगणप्रधानञ्च वशिष्ठं विहाय न कस्याप्युत्तरदायी ।

तथाऽष्टानामृषीणामप्येका समितिरासीत्—वशिष्ठः, वामदेवः सुयज्ञः, जाबालिः, काश्यपः, गौतमः, मार्कण्डेयः, कात्यायनः । एते ऋषयो ग्रामाद् बहिः स्वस्वाश्रमे न्यवात्सुः । आवश्यकतायामुपस्थितायां योग्यं मार्गं प्रदर्शयन्ति स्म ।

एतेषामष्टानां द्वावृत्विजावास्ताम् । यद्यपि 'एतैर्ब्रह्मर्षिभिर्नित्यमृत्विजस्तस्य पौर्वकाः' इत्यनेन परम्परागतत्वं विज्ञायते, तथापि तत्रैव—

विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ।
श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ॥
कीर्तिमन्तः प्रणिहिता यथावचनकारिणः ।
तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः ॥
क्रोधात् कामार्थहेतोर्वा न ब्रूयादनृतं वचः ।
तेषामविदितं किञ्चित् स्वेषु नास्ति परेषु वा ॥
क्रियमाणं कृतं वाऽपि चारेणाऽपि चिकीर्षितम् ॥

इत्यादिर्बालकाण्डे सप्तमसर्ग उल्लेखः । एतेनैतस्य मन्त्रिमण्डलस्य ऋषिमण्डलस्य हस्त एकैकं चारमण्डलमप्यासीदिति लभ्यते ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

राजा दशरथः सुतार्थं यज्ञकरणेऽपि ऋषिमण्डलस्य सम्मतिमपेक्षमाणो वशिष्ठादीन् ऋषीनाहूय स्वमनोरथमावेदयत्। तैश्चानुमोदितोऽश्वमेधं चकार।

एते च वशिष्ठादय ऋषयो यथाधर्मं राजानमप्यादिशन्ति कर्तव्याकर्तव्यविषये। यतस्त ऋषयो ज्ञानधना राजसत्तानधीनवृत्तयः।

बलम्—

अमात्यास्ते कोशसंग्रहं बलसंग्रहं कुर्वन्तो राज्यं दृढयन्ति— कोशसंग्रहणे युक्ता बलस्य च परिग्रहे" इति। इत्थं ते सैन्यसंग्रहमकुर्वन्। यत्र योद्धारो यथा—

ये च बाणैर्न विद्धयन्ति विविक्तमपरापरम्।
शब्दवेध्यञ्च विततं लघुहस्ता विशारदाः॥
सिंहव्याघ्रवराहाणां मत्तानां नदतां वने।
हन्तारो निशितैः शस्त्रैर्बलाद् बाहुबलैरपि॥
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः॥ इति।

प्रकृतिमण्डलं रामायणे वर्णितं द्विविधं प्रो म्-कदाचिद्विश्वामित्रो राजानं दशरथं तत्पुत्रं रामं यज्ञरक्षार्थमयाचत। दशरथेन—

कथमप्यमरप्रख्यं संग्रामाणामकोविदम्।
बालं मे तनयं ब्रह्मन्नैव दास्यामि पुत्रकम्॥

इति प्रत्याख्याते तद्याचने कौशिको विश्वामित्रः क्रुद्धोऽवदत्—

यदिदं ते क्षमं राजन् गमिष्यामि यथाऽऽगतम्।
मिथ्याप्रतिज्ञः काकुत्स्थः सुखी भव सबान्धवः॥

तदा—

नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत्।
संश्रुत्यैवं करिष्यामीत्यकुर्वाणस्य राघव।
इष्टापूर्तवधो भूयात् तस्माद्रामं विसर्जय॥

इति वसिष्ठवचनेन सलक्ष्मणो रामो विश्वामित्रेण सह वनं प्रेषितः।

यदा राजाऽपि स्ववचः परित्यज्य पुत्रस्नेहपरवशोऽभूत्, तदा ऋषिमण्डलप्रधानो वसिष्ठस्तं प्राबोधयत्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अनेन राजाऽप्यनियन्त्रितां सत्तां नान्वभवत् । द्वितीयः प्रभाव ऋषिमण्डलस्योत्तरकाण्ड उपलभ्यते ।

एकदा तपस्विमुनिरूपेण कालपुरुष आगत । स रामं व्यज्ञापयत्—

द्वन्द्वे ह्येतत् प्रवक्तव्यं हितं वै यद्यवेक्षसे ।
यः श्रृणोति निरीक्षेद् वा स वध्यो भविता तव ॥

तच्छ्रुत्वा रामोऽन्यः कोऽपि न प्रविशेन्न वा वार्तां श्रृणुयादिति हेतोर्लक्ष्मणं द्वारपालं कृत्वा तापसरूपस्य कालपुरुषस्य वचः श्रोतुं समुपस्थितः । तेनोक्तम्—ब्रह्मणा प्रेषितोऽस्मि । स च मन्मुखेन कथयति—कृतकार्योऽसि, स्वसङ्कल्पादेव मानुषभावेन जातोऽसि. त्वं स्वयं भगवान् विष्णुः । यदीच्छसि चेत् , समीपमागच्छ । रावणस्य वधाय दशवर्षसहस्राणि दशवर्षशतानि भूमौ मानुषभावेन स्थातुं नियमं कृत्वाऽवतीर्णोऽसि, स समयो जातः—

कालो नरवरश्रेष्ठ समीपमुपवर्तितुम् ।
यदि भूयो महाराज प्रजा इच्छस्युपासितुम् ॥
वस वा वीर भद्रं ते एवमाह पितामहः ॥इति।

ततो रामेण प्रत्युत्तरं प्रदत्तम् । अत्रान्तरे रामदर्शनाकांक्षी दुर्वासा नाम ऋषी राजद्वारमागच्छत् । तेनोक्तम्—अस्मिन्नेव क्षणे मां प्राप्तं राघवाय निवेदय । नो चेदहं मन्युं धारयितुं न शक्ष्यामि, त्वां पुरं विषयं युष्माकं सन्ततिं भरतं सर्वं च शप्स्यामि । तदा लक्ष्मणोऽचिन्तयत्—'एकस्य मरणं मेऽस्तु मा भूत् सर्वविनाशनम्' एवं चिन्तयित्वा लक्ष्मणोऽन्तः प्रविष्टः । तस्मिन्नेव क्षणे कालपुरुषो निवृत्तः । रामश्च बहिराययौ, दुर्वाससं सत्कृत्य व्यसर्जयत् । ततः स कालपुरुषेण जातं समयमस्मरत्—"योऽन्तः प्रविशति, स हन्तव्यः" इति ।

'अवाङ्मुखो दीनमना व्याहर्तुं न शशाक ह' लक्ष्मणोऽवदत्—"मां जहि, सत्यप्रतिज्ञो भव ।

हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः ।
यदि प्रीतिर्महाराज यदनुग्राह्यता मयि ॥
जहि मां निर्विशङ्कस्त्वम् ……………।

कथं लक्ष्मणो हन्तव्यः ? कथं वा प्रतिज्ञा पालनीया ? एतस्मिन् व्यतिकरे मन्त्रिण आहूताः, पुरोधसोऽपि सर्वं वृत्तान्तं तेभ्योऽकथयन्—तदापि वशिष्ठ एवाभवन्निर्णेता । तेनोक्तम्—त्यजैनं बलवान् कालो मा प्रतिज्ञां वृथा कृथाः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एतेनाऽपि विज्ञायते मन्त्रिमण्डलम् ऋषिमण्डलञ्च प्रसङ्गे राजानमपि, अप्रियमपि भावयित्वा न्याय्ये पथि प्रावर्तयत् । (उ० का० स० १०)

अयणं राजानो नाकुर्वन् । अत एव दशरथो रामं स्वनिग्रहाय प्रेरयति ।

अहं राघव कैकेय्या वरदानेन मोहितः ।
अयोध्यायां त्वमेवाद्य राजा भव निगृह्य माम् ॥

रामोऽपि वक्ति—

यस्तु युद्धे वरो दत्तः कैकेय्यै वरदस्त्वया ।
दीयतां निखिलेनैव सत्यस्त्वं भव पार्थिव ॥
( अयो० का० स० ३४ )

अग्रेऽपि रामेणोक्तं भरतं प्रति—

तद्वचः पितुरेवाहं संमतं धर्मचारिणाम् ।
कर्मणा पालयिष्यामि वनवासेन राघव ॥

रामभरतसंवादे रामो द्वितीयमपि समयं स्मरति—

पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् ।
मातामहे समाश्रौषीद् राज्यशुल्कमनुत्तमम् ॥

कैकेयीविवाहप्रसङ्गेऽस्यां यः पुत्रो भविष्यति, तस्मै राज्यं दास्यामीति दशरथेन प्रतिश्रुतमासीत् । पुनश्च रामः सत्यस्य माहात्म्यं बहुतरं कथयति ।

एतादृशैः प्रसङ्गैः सत्यपालनं वचनपालनं परमावश्यकं परिगण्यमानमासीदिति प्रतीयते । यथाऽमात्यानां योजना राज्ये प्रधानमङ्गमासीत्, तथा चाराणामपि । परेषां प्रवृत्तिज्ञानार्थं चारा अपि नियोज्यन्ते स्म । रामस्य लङ्कागमनप्रवृत्तिं शार्दूलनामा चारो रावणायाऽश्रावयत् । पुनश्च रावणः शुकं प्रेषयामास, ततश्च शुकसारणावुभौ । तेन विज्ञायते चारा अपि राज्येऽभिरक्ष्यन्ते स्म ।

दूतानामवध्यत्वमपि तत्रैवोक्तम् । युद्धकाण्डे भगवतो रामस्य महामनस्त्वं स्पष्टीभवति । रामसैन्यस्य प्रवृत्तिं ज्ञातुं रावणेन द्वौ शुकसारणनामानौ प्रहितौ । तौ विभीषणेन विज्ञातौ गृहीतौ च । तौ चारौ विभीषणो रामायविदयति स्म । कृताञ्जलिपुटौ व्यथितौ भीतौ जीविते निराशौ तौ दृष्ट्वा श्रीरामः—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अब्रवीत् प्रहसन् वाक्यं सर्वभूतहिते रतः।
यदि दृष्टं बलं सर्वं वयं वा सुसमाहिताः॥
यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम्॥
(युद्धकाण्डम्)

दूता न वधार्हा इति रामस्तौ मोक्तुमादिदेश। एवं रामस्य वनगमनसमये सुमन्त्रः सूतोऽमात्यः कैकेयीं कटूनि वचनान्यश्रावयत्; रामे वनगमनायोद्यते दशरथे च मूर्च्छामापन्ने—

ततो निर्धूय सहसा शिरो निःश्वस्य चासकृत्।
पाणिं पाणौ विनिष्पिष्य दन्तान् कटकटाय्य च॥

इत्यादि क्रोधं प्रदर्शयति—

कम्पयन्निव कैकेय्या हृदयं वाक्छरैः शितैः।
वाक्यवज्रैरनुपमैर्विभिन्दन्निव चाशुगैः॥
कैकेय्याः सर्वमर्माणि सुमन्त्रः प्रत्यभाषत।
यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम्॥
भर्ता सर्वस्य जगत. स्थावरस्य चरस्य च।
नह्यकार्यतमं किञ्चित् तव देवीह दृश्यते।
पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः॥
(अयो० का० स० ३५)

अस्मिन् प्रसङ्गे वसिष्ठेनर्षिमुख्येन न किमप्यभिहितम् 'वचनपालनं राज्ञो धर्मः' इति मत्वेव। किन्तु रामेण वनोचितानि चीराणि परिधाप्यमानां सीतां निवार्य वसिष्ठो वदति—

अतिप्रवृत्ते दुर्मेधे कैकेयि कुलपांसनि।
वञ्चयित्वा च राजानं न प्रमाणेऽवतिष्ठसे॥

इत्याद्युक्त्वा कैकेयीं भर्त्सयामास। अमात्या ऋषयश्च राजानं राज्ञीमपि वा कटून्यप्युचितानि वचनानि श्रावयितुं नैव खज्जन्ति स्म।

एवं दशरथे पञ्चत्वं गतेऽराजकतायां महद् भयं पश्यन्त्यः प्रजा ऋषयश्च समवेता अराजकतायां भयमुक्त्वा—

अहो तम इवेदं स्यान्न प्रज्ञायेत किञ्चन।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

जीवत्यपि महाराजे तवैव वचनं वयम् ।
नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥

इत्यनेन ऋषिमण्डलप्रमुखस्य वसिष्ठस्य प्रभावपरिमाणं स्पष्टं लक्ष्यते । राज्याभिषेकादिप्रसङ्गेषु मन्त्रिणां प्रजामुख्यानाम् ऋषीणाञ्च सम्मतिरपेक्षिताऽमन्यत । तथा युद्धप्रसङ्गेषु मन्त्रिणां सेनापतीनां सम्मतिर्मुख्याऽमन्यत । युद्धकाण्डे रावणोऽपि मन्त्रणार्थं राक्षसानाहूय मन्त्रणां करोति । तत्र मन्त्रविषये स सम्यग् वदति, किन्तु तथा नाचरति । स वदति—

किं करिष्यामि भद्रं वः किं वो युक्तमनन्तरम् ।
उच्यतां नः समर्थं यत् कृतञ्च सुकृतं भवेत् ॥
मन्त्रमूलं च विजयं प्रवदन्ति मनस्विनः ।
तस्माद् वै रोचये मन्त्रं रामं प्रति महाबलाः ॥

अग्रेऽपि स एव वदति—

त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।
तेषां तु समवेतानां गुणदोषौ वदाम्यहम् ॥
मन्त्रस्त्रिभिर्हि संयुक्तः समर्थैर्मन्त्रनिर्णये ।
मित्रैर्वापि समानार्थैर्बान्धवैरपि वाऽधिकैः ॥
स हितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तयेत् ।
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥
एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः ।
एकः कार्याणि कुरुते तमाहुः मध्यमं नरम् ॥
गुणदोषौ न निश्चित्य त्यक्त्वा दैवव्यपाश्रयम् ।
करिष्यामीति यः कार्यमुपेक्षेत् स नराधमः ॥

यथा मन्त्रे नियुक्तानां पुरुषाणां त्रैविध्यम्, तथा मन्त्रस्याऽपि त्रैविध्यमुक्तं रावणेन । यथा—

यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः ।
एवं मन्त्रोऽपि विज्ञेय उत्तमाधममध्यमाः ॥
ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ।
मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

बह्वीरपि मतीर्गत्वा मन्त्रिणामर्थनिर्णयः ।
पुनर्यत्रैकतां प्राप्तः स मन्त्रो मध्यमः स्मृतः ॥
अन्योन्यमतिमास्थाय यत्र सम्प्रति भाष्यते ।
न चैकमत्ये श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते ॥
तस्मिन्नेवंविधे कार्ये विरुद्धे वानरैः सह ।
हितं पुरे च सैन्ये च सर्वं सम्मन्त्र्यतां मम ॥

तिसृणां शक्तीनां मन्त्रशक्तेरपि पर्याप्त आदर आसीत् । एवं वचनपालनं राज्ञां कृते आवश्यकं कर्तव्यमासीत् । यद्यपि तत्तु सर्वेषामावश्यकं कर्तव्य, तथाऽपि तस्मिन् अपवादानां दूतानामवध्यत्वं रामः सम्मेने । रामेणाऽप्यङ्गदो दूतत्वेन प्रेषितः । तं दृष्ट्वा राक्षसाः कोलाह ः चक्रुः । रावणश्च गृह्यताम्, बध्यतामित्यगादीत् । 'दूतो न हन्तव्यः' इति रक्षसां नीतिर्नासीत् ।

अथ बहुप्रक्षिप्तायाः रजककथाया विषये विचार्यते । वाल्मीकिरामायणे रजकस्योल्लेखो न लभ्यते, किन्तु लङ्काविजयं कृत्वाऽयोध्यायामागतस्य रामस्य राज्याभिषेको जातः । ततः सीता गर्भं प्राप । रामस्तां पप्रच्छ—

"किमिच्छसि वरारोहे कामः किं क्रियतां तव" इति ।

सीतया तपोवनगमनेच्छा प्रकटिता । रामेणोक्तम्—विश्रब्धा भव, श्वस्त्वं तपोवनं गमिष्यसीति । रामस्ततः कक्षान्तरं गतः तं हास्यकाराः परिहाससमन्विता बहुविधाः कथाः कथयन्ति स्म । अत्रान्तरे भद्रनामा चारो रामेण पौरकथाः पृष्टो राममवदत्—

कीदृशं हृदयं तस्य सीतासम्भोगजं सुखम् ।
अङ्कमारोप्य तु पुरा रावणेन बलाद् धृताम् ॥
लङ्कामपि पुरा नीतामशोकवनिकां गताम् ।
रक्षसां वशमापन्नां कथं रामो न कुत्स्यति ॥

इतोऽप्यधिकं तु—

अस्माकमपि दारेषु सहनीयं भविष्यति ।
यथा हि कुरुते राजा प्रजास्तमनुकुर्वते ॥ इति ॥

पौरजानपदानामेवंविधा वार्ताः श्रुत्वा रामः सुहृदोऽपृच्छत् । एतद्वचनं युक्तमयुक्तं वा भवन्तो वदन्तु । तेऽपि—प्रत्यूचू राघवं दीनमेवमेतन्न संशयः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ततो रामेण लक्ष्मणमाहूय सीता विवासितेति वाल्मीकिरामायणे। एतेन पौराणां जानपदानाञ्च कियान् प्रभाव आसीदिति, तद् व्यक्तं भवति।

वाल्मीकिरामायणे रजकस्य रजक्या वा निर्देशो नास्ति।

रामराज्यकालेऽपि सर्वे वर्णाः स्वस्वकार्यपरा आसन्। मन्ये, स्वस्वकार्यं कुर्वतां तेषामितरवर्णकार्येषु हस्तक्षेपं कर्तुं समयोऽपि न स्यात्, बुद्धिरपि। तथाप्युत्तरकाण्डे कथैवं वर्तते—कस्यचिद् वृद्धब्राह्मणस्य पुत्रो मृतः। स तु मृतं बालकं गृहीत्वा राजद्वारमागत्य रुरोद। सोऽवदत्—

नेदृशं दृष्टपूर्वं मे श्रुतं वा घोरदर्शनम्।
मृत्युरप्राप्तकालानां रामस्य विषये ह्ययम्॥

इदं राजदोषादेवेति वदति—"रामस्य दुष्कृतं किञ्चिन्महदस्ति न संशयः"।

अतस्तमेवैनं बालकं जीवय, नो चेद् राजद्वार्येव पत्न्या सहाऽहं मरिष्यामि। यतः—

"राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः"।

रामस्तच्छ्रुत्वा ऋषिमण्डलमाहूतवान्। वणिजोऽपि रामः वृत्तान्तं श्रावयामास। तदाकर्ण्य नारदेन युगधर्मा व्याख्याताः। तव च विषये शूद्रस्तपस्यति, अत एव ब्राह्मणस्य बालो मृतः। तं त्वं स्वकीये विषये मार्गय। यदकार्यं करोति, तद्वारणाय यत्नं कुरु। नारदेनैवमुक्ते रामः पुष्पकमारुह्य दक्षिणस्यां दिशि महति सरस्यधोमुखं लम्बमानं तापसं ददर्श। कोऽसीति पृष्टे "शम्बूको नाम शूद्रोऽस्मि", स्वर्गकामनया तपश्चराम्युत्तरिते, अकार्यकरणाद्रामेण स हतः, देवानां प्रसादाज्जीवितश्च ब्राह्मणपुत्रः। वर्णानां स्वस्वकार्यमेव राजानुमतं भवति, अकार्यकरणे प्राणान्तो दण्डः।

एवं सति याश्च याश्चोन्नतयोऽभ्युदयाश्च प्राप्तव्यास्तास्ता उन्नतयोऽभ्युदयाश्च स्वस्वकर्मणैवेति शासनं सुव्यवस्थितमासीत्।

भगवतो रामस्य नीतिस्तु भरते वनमागते रामः कुशलं पृच्छति, तत्रैव वचनेषु स्पष्टीभवति। रामो भरतं पृच्छति 'भरतो राजा जातः' इति मत्वैव। तात, त्वया सुयोग्याः शूरा जितेन्द्रियाः कुलीना इङ्गितज्ञा मन्त्रिणः कृताः ? (अयो० का० स० १००, श्लोक १५)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अनेन मन्त्रिणां कुलीनत्वं शूरत्वमित्यादयो गुणाः विवक्षिताः, न केवलमानुवंशिकत्वम्। तथा सति सुयोग्यत्वादिगुणविशिष्टमन्त्रिकरणे प्रश्नो निरवकाशः स्यात्। आनुवंशिकत्वमप्यत्र उक्तमस्ति 'अमात्यानुपधातीतान् पितृपैतामहान् शुचीन्' इति।

अन्यच्च मन्त्रस्य महिमानमपि रामः प्रदर्शयति—

'राघव, मन्त्रिधुर्यैः शास्त्रकोविदैरमात्यैः सह मन्त्रो विजयस्य मूलमस्ति। स च मन्त्रः सुसंवृतोऽन्यैरविदित एव विजयमूलम्"।

पुनरपि रामो वदति—त्वमेक एव न मन्त्रयसे नु? बहुभिः सह न मन्त्रयसे नु? यन्मन्त्रितं तदन्यैर्ज्ञातं न भवति नु? (श्लोक १८)

दण्डोऽपि नोग्रो रामस्याभीष्टः। उग्रे दण्डे सति प्रजा उद्विग्ना राजानमवजानन्ति।

बलवन्तो युद्धविशारदा एव सैन्ये विनियोज्याः। एवं सैन्ये नियुक्तेभ्यः यथासमयं भोजनदानं वेतनदानञ्चावश्यकम्।

मन्त्रिद्वयमण्डलादतिरिक्ताः पञ्चदशाऽन्येऽप्यधिकारिणो रामायणे वर्णिताः सन्ति। यथा—

१. सेनापतिः। २. प्रशास्ता (अयं सेनानिवेशस्य तद्रक्षणस्य च व्यवस्थां करोति)। ३. दौवारिकः (द्वार्यधिकृतः)। ४. अन्तःपुराधिकारी। ५. कारागृहाधिकारी। ६. कोशाध्यक्षः। ७. राजशासनप्रवर्तकः (राजाज्ञायाः प्रचारकः, आज्ञाप्येषु राजाज्ञाया वक्ता)। ८. प्राड्विवाकः (व्यवहारप्रष्टा)। ९. धर्मासनाधिकृतः। १०. व्यवहार-निर्णेता सभ्यः। ११. सेनाया जीवितधृतिदानाध्यक्षः। १२. नगराध्यक्षः। १३. राष्ट्रान्तपालः सीमारक्षकः। १४. दुष्टानां दण्डं कृत्वा व्यवस्थारक्षकः। १५. जलगिरिवनदुर्गपालः।

एतेषु पञ्चदशसु स्वराज्ये परराज्ये च त्रयस्त्रयश्चारा नियोक्तव्या आसन्। परराज्ये तु त्रयोऽधिकारिणोऽधिका अपि निरीक्षणीया आसन्।

रामराज्यकाले वर्णानां वर्णाश्रमधर्म एव धर्मः। चत्वारो वर्णाः। पञ्चमो निषादस्थपतिः। वनवासिनो निषादाः, वन्यप्राणिहिंसया तेषां जीवनमासीत्। अभ्यन्तरव्यवस्थार्थं तैर्यः स्थापितो नियन्ता, स निषादस्थपतिः। स निषादानां राजा। स कथञ्चित् प्राप्तधनो रौद्रयागं कर्तुमनुमतः "निषादस्थपतिं याजयेत्" इति। "वास्तुमयं चरुं निर्वपेत्। एतया निषादस्थपतिं याजयेत्"। "तात्कालिकाचार्योपदेशादिना विद्यां संपाद्य धनिको निषादस्थपतिः रौद्रयागं कुर्यात्" (शाबरभाष्यम्)।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

चातुर्वर्ण्यं निषादश्थपतिश्चेति पञ्चजनाः ।
यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् ॥
( ऋ० ८ मं० १-१३-४ )

एते सर्वेऽपि वर्णाः स्वधर्मतत्परश्चेद्राष्ट्ररक्षणाय भवत्येका सामग्रीति व्युत्पद्यते ।

केचिद्राजानः दशरथस्य शासनं शिरसा गृह्णन्तस्तं चक्रवर्तित्वेन स्वीकुर्वन्ति स्म, इति रामायणे वर्णितमस्ति । यथा—

१. मिथिलानरेशो जनकः । २. काशिराजः । ३. केकयराजः । ४ अङ्गराजो रोमपादः । ५. कोसलराजो भानुमान् । ६. मगधराजः । ७. सिन्धुराजः । ८. सौवीरराजः । ९. सौराष्ट्रराजः । १०. दाक्षिणात्या राजानश्च ।

केचन नेत्यपि । अत एव परचक्रभयं प्रागुद्दिष्टमासीत् ।

निष्कर्षस्त्वयमेव समग्रायामपि राज्यव्यवस्थायां राजसत्तापेक्षयाऽपि जनताया अभिप्रायस्य मूल्यमधिकमासीत् । यत्र राज्ञोऽनुकूलता प्रतिकूलता वा, सुखं वा दुःखं वा, प्रियमप्रियं वा गणनीयं नाऽभूत् । वचनपालनविषये पितुर्वचनगौरवाद्राज्यमपि रामोऽजहात् । तथा कालपुरुषेण सह वार्ताप्रसङ्गे लक्ष्मणमपि रामोऽत्यजत् । तथा तादृशा अन्येऽपि प्रसङ्गाः स्युरपि । तत्र वचनपालनेऽयमेव हेतुर्यदेकस्मिन् वचने प्रतिज्ञायां वाऽस्मासु निष्फलेषु वा पराङ्मुखेषु वा जातेषु को वा कथं वा विश्वसेत् । राजनि प्रजानां विश्वासाभावे न केवलं राज्ञो विनाशः, अपि तु समग्रस्य राष्ट्रस्य ।

परचक्रभये समापतिते विश्वासाभावात् कोऽपि साहाय्यं न कुर्यात् । प्रजानां साहाय्याभावे न केवलं स्वपराक्रमबलेन शस्त्रबलेन राष्ट्रं सुरक्षितं भवेत् । सर्वसमर्थोऽपि केवलं स्वपराक्रमेणैव समेषां राक्षसानां विजेता भगवान् रामोऽप्यात्मानं प्रजाधीनं मन्यते स्म। एतदर्थमेव स्वदृष्टशुचितायाः सीतायास्त्यागेऽपि रामः स्वं गौरवान्वितममन्यत । एतदर्थमेव त्यक्तुस्त्यक्तायाश्च समग्रेऽप्यार्यावर्तेऽद्यत्वे गन्धपुष्पादिभिः पूजनं क्रियते । प्रजाभिप्रायस्यैव गौरवं क्रियते । यावत्पर्यन्तमियं भावना जागरूका विजृम्भमाणा आसीत्, तावत्पर्यन्तमार्यावर्ते न किमपि परचक्रभयमासीत् । पश्चात् कालप्रवाहेण खण्डितायामस्यां भावनायां श्लथीभूता राजसत्ता परकीयैः समये समये यथासम्भवं खण्डयमाना आर्यावर्तं पराधीनमभावयत् ।

इच्छामो वयमद्यत्वेऽपि परमेश्वरप्रसादेन जनताया राजसत्तायाश्चाभिप्रायैक्यमखण्डितं स्यात् । भारतेन प्राप्तं स्वाराज्यं सुराज्यं भवेत् । पुनरपि पूर्वमेवेदमार्यावर्तं समग्रस्य जगतो गुरुत्वमावहेत् । स्थिरशान्तेमार्गदर्शकं भवेदिति विरमामि ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# द्वितीयं प्रवचनम्

सामान्यतो राजनीतिविषये यद्वक्तव्यं तत् पूर्वव्याख्यान उक्तमस्ति, तथापि कश्चिद्विशेषो वक्ष्यते। रामायणे रामस्य गृहे विरोधो बहिर्विरोधश्चेत्युभयविधविरोधौ प्रतिपक्षभूतावास्ताम्। गृहविरोधे—कैकेयीसमुद्भावितसंक्षोभे श्रीरामचन्द्रेण गुरुजनेषु समुचितविनयप्रदर्शनेन स्वमहत्त्वमेव प्रख्यापितम्, न दैन्यम्। तथैव बहिर्विरोधे रावणेन सह युधि विक्रमप्रदर्शनेनापि स्वमहत्त्वमेवावेदितम्। इयं सर्वाऽपि नीतिः परेषां नीतिमार्गोपदेशायालङ्कर्मीणेति स्पष्टं वक्तुं शक्यते। महाभारते सर्वोऽपि विरोधो गृहगत एव। कौरवाणामपि भरतवंशोद्भवत्वाद्दार-तत्वमेव। तत्रापि यावच्छक्यं पाण्डवैर्गुरुजनेषु विनीतैर्भूत्वा अन्यायमधर्मञ्च सोढ्वा कष्टान्यनु-भूतानि। वयं मन्यामहे, एतादृशेषु प्रसङ्गेषु विनयप्रदर्शन—गुरुजनाज्ञापालनसमुद्भूतं सुखं तानि सर्वाणि कष्टान्यतिशेते।

अन्ततश्चैतादृशकष्टसहनमधर्मसहनं वा पापानामुत्तेजनाय भवति, तत्र पराक्रमदर्शनमेव श्रेय इति मत्वा कौरवैः सह युद्धसमुद्योगः।

एतच्च भगवता श्रीकृष्णेन गीतायां स्वोदाहरणप्रदर्शनेन स्पष्टीकृतम्—

"यद्यदाचरति श्रेष्ठस्तत् तदेवेतरो जनः।"
(भ० गी० ३।२१)

"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।"
(भ० गी० ३।२२)

"उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्" इत्यादि
(भ० गी० ३।२४)

एतच्च महाभारते कौरवपाण्डववृत्तान्तवर्णनेन महर्षिणा व्यासेन स्पष्टीकृतम्। समग्र-महाभारतगतराजनीतिपरिशीलनं परिमितेन कालेनाशक्यमिव शान्तिपर्वणि भीष्मेण राजधर्म-प्रकरणमपि विस्तरेणोक्तमस्ति। अत्र च महाभारतगतान् कांश्चित् प्रसङ्गानुल्लिख्य तत्तत्प्रसङ्गेषु कौरवैः पाण्डवैश्च समावृतां नीतिमुपस्थापयिष्यामि —

कौरवपाण्डवानां राज्यकाले द्वापरयुगं प्रवर्तमानमासीत्। पुरा कृतयुगे सर्वे वर्णाः स्वं स्वं कर्म कुर्वाणा राजसत्तानपेक्षस्थितय आसन्निति पूर्वमुक्तमेव।

श्रीमद्भागवते कृतयुगस्थितिरेकेन श्लोकेन निर्दिष्टा—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः।
देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च॥
(स्क. ९ अ. १४ श्लो ४८)

जनस्थितिरपि महाभारत उक्ता। यथा—

न तस्मिन् युगसंसर्गे व्याधयो नेन्द्रियक्षयः।
नासूया नाऽपि रुदितं न दर्पो नाऽपि वैकृतम्॥
न विग्रहः कुतस्तन्द्री न द्वेषो न च पैशुनम्।
न भयं नाऽपि सन्तापो न चेर्ष्या न च मत्सरः॥
ततः परमकं ब्रह्म सा गतिर्योगिना परा।
आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः।
कृते युगे समभवन् स्वकर्मनिरताः प्रजाः॥
(वन. प. अ. १४५)

यद्येषैव जनानां व्यवस्थितिः, कोऽस्ति तत्र राजसत्ताया अवकाशः? तथा उल्लिखितमपि—

न वै राज्यं न राजाऽऽसीन् न च दण्डो न दण्डिकः।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्॥
(शान्ति. प. अ. ५९)

किन्तु क्रमेण मोहवशमापन्ना जना धर्ममत्यजन्। ततश्च लोभ उत्पन्नः, ततश्च कामः, ततश्च जनान् रागः प्राविशत्। उक्तमेतच्छान्तिपर्वणि—

रक्ताश्च नाभ्यजानन्त कार्यकारे युधिष्ठिर।
अगम्यागमनं चैव वाच्यावाच्यं तथैव च॥
भक्ष्याभक्ष्यञ्च राजेन्द्र! दोषादोषञ्च नात्यजन्।
विलुप्ते नरलोके वै ब्रह्म चैव ननाश ह॥
नाशाच्च ब्रह्मणो राजन् धर्मो नाशमुपागमत्।
(शा० प० अ. ५९)

धर्मे नष्टे वित्रस्ता देवा ब्रह्मणः सकाशं गत्वा स्वधर्मलोपेन "ततः स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर" इत्येवं तैरुक्तम्—मनुष्याणां कृते वृष्टिरुपरिष्टाद्भवति, देवानां कृते भूमितलाद्

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भवति । यज्ञकर्मभिर्जनाः देवांस्तोषयन्ति । तानि यज्ञकर्माणि देवानां कृते वृष्टिरिवाप्यायकानि भवन्ति । यज्ञेषु विनष्टेषु देवानां वृष्टिरेव प्रणष्टा स्यात् । तेषां देवानां श्रेयोऽर्थं लक्षाध्यायात्मकं नीतिशास्त्रं ब्रह्मणा व्यरचि । महाभारते ब्रह्मप्रणीतनीतिशास्त्रस्य सूच्यप्यस्ति निर्दिष्टा । तन्नीतिशास्त्रं विशालाक्षः शङ्करो जग्राह । स विशालाक्षस्तच्छास्त्रं संचिक्षेप । संक्षिप्तं तच्छास्त्रं वैशालाक्षमिति संज्ञया प्रथितमभूत्, दशसहस्राध्यायात्मकम् । तस्मात् तच्छास्त्रं पुरन्दरः प्राप्य सङ्क्षिप्य अध्यायानां पञ्चसहस्राणि चकार । ततश्च बृहस्पति-स्त्रीणि सहस्राणि चकार, तद्बार्हस्पत्यं नीतिशास्त्रमिति प्रथितम् । ततश्च शुक्रोऽध्यायानां सहस्रं चकार । स एष नीतिशास्त्रस्योद्गमो महाभारते वर्णितः । तत एव राजसत्ताया उद्गमोऽभवत् । स च राजा ब्राह्मणानामपि मान्योऽभवत् । राज्ञो देवरूपत्वं तत्रैव शान्तिपर्वण्युक्तम् । यथा—

न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ।।

राजधर्मस्याऽपि शान्तिपर्वणि इन्द्रमान्धातृसंवादेऽपि प्रशंसोपलभ्यते । राजत्वं रामायणेऽपि महाभारतेऽपि चानुवंशिकं दृश्यते । तत्राऽपि ज्येष्ठपुत्रस्यैवाधिकारित्वमिति नियमोऽप्यासीत् । राज्यस्य म्लानिविकासयोर्हेतुत्वेन राजैव परिगणितः । राज्ञा रक्ष्याणि सप्त । यथा—

राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे ।
आत्माऽमात्याश्च कोशश्च दण्डो मित्राणि चैव हि ॥
तथा जनपदाश्चैव पुरञ्च कुरुनन्दन ।
एतत् सप्तात्मकं राज्यं परिपालय यत्नतः ॥
किं तस्य तपसा राज्ञः किञ्च तस्याध्वरैरपि ।
सुपालितप्रजो यः स्यात् सर्वधर्मविदेव सः ॥
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद् राजा कालस्य कारणम् ।।
( शा० प० अ० ६६ )

अग्रे गत्वा वदति—राजैव कृतं युगं सृजति, राजैव त्रेतां द्वापरं कलिञ्च सृजति । राजसत्ताया दण्डनीतेश्चावश्यकता शान्तिपर्वणि बृहस्पतिवसुमनसोः संवाद इत्थं प्रतिपादिता—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

राजमूलो महाप्राज्ञ धर्मो लोकस्य लक्ष्यते ।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥

इत्युपक्रम्य व्यतिरेकेण—

हरेयुर्बलवन्तोऽपि दुर्बलानां परिग्रहान् ।
हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत् ॥

इत्यादि बहूक्तम् । अग्रे—

सम्यग् दण्डधरो मुखं राजा धर्ममवाप्नुयात् ।
नृपस्य सततं दण्डः सम्यग् धर्मः प्रशस्यते ॥

यद्यपि कृतयुगे प्रजानां स्वभावत एव धर्मनिष्ठाया दण्डनीतेरावश्यकता न भवति । किन्तु तासां सम्यग् धर्मनिष्ठत्वे राज्ञो दण्डनीतिरेव मुख्यं कारणमिति भीष्म-वचनाद् ज्ञायते ।

दण्डनीत्यां यदा राजा सम्यग् कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालसृष्टं प्रवर्त्तते ॥

ततश्च—

दण्डनीत्यां यदा राजा त्रीनंशाननुवर्तते ।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥

अग्रे—

अर्द्धं त्यक्त्वा यदा राजा नीत्यर्द्धमनुवर्तते ।
ततस्तु द्वापरं नाम स कालः संप्रवर्तते ॥

कलिस्तु—

दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः ।
प्रजा क्लिश्यत्ययोगेन ततः कलिः प्रवर्तते ॥

एवमुक्त्वा भीष्मेण राज्ञ आवश्यकाः षड्त्रिंशद्गुणाः निर्दिष्टाः । इत्थं राजधर्मा-नुशासनपर्वणि बहवो राजधर्माः प्रतिपादिताः । अत्र तु कौरवैः पाण्डवैश्च कस्मिन् कस्मिन् प्रसङ्गे, केषां केषां धर्माणामधर्माणां विधर्माणाञ्चोपयोगः कृत इत्येतावन्मात्रमेव निर्देक्ष्यते । मुख्येषु प्रसङ्गेष्वेव सम्पूर्णस्य भारतस्य तत्रत्याया राजनीतेश्च विमर्शो नह्यल्पेन कालेनाल्पैश्च शब्दैः केनाऽपि कर्तुं शक्यः ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं कालप्रवर्तकेन —

आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः ।
अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥

आनुवंशिके राजत्वे सत्यपि सति कारणे प्रजा राजानमुत्तराधिकारिनिर्णये निवारयन्त्यपि। महाभारते —

प्रतीपस्य राज्ञस्त्रयः पुत्रा आसन्। देवापिः शन्तनुर्बाह्लीकश्च। देवापिस्त्वग्दोष-दुष्टः। तस्य त्वचि व्याधिरासीत्। स एव ज्येष्ठत्वाद् राज्याधिकारी आसीत्। राजा प्रतीपो वृद्धस्तं राज्येऽभिषेक्तुमुद्यतो बभूव। सर्वेषु सम्भारेषु सम्भृतेषु—

तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह ।
सर्वे निवारयामासुर्देवापेरभिषेचनम् ॥

पौरजानपदानामपि रामायणेऽपि भारतेऽपि महती प्रतिष्ठोपवर्णिता। तेषां मतेन देवापे राज्याभिषेको न जातः, स तु वनं गतः। तदनुजः शन्तनुः प्रजाभिर्नृपत्वेन स्वीकृतः। ज्येष्ठस्य दुष्टत्वे करणविकलत्वे वा तदनुजोऽपि राजा भवति स्म।

महाभारते विशुद्धराजनीतिवर्णनं यथा लभ्यते तथा कूटनीतिवर्णनमपि। विदुरभीष्मप्रभृतिभिर्यथा विशुद्धा नीतिर्वर्णिता, तथा [1]कणिकादिभिर्दुर्नीतिरपि वर्णिता। अवसरे भीष्मो यथार्थमेव वदति। यथोद्योगपर्वणि हस्तिनापुरादागतः कृष्णस्तत्र भीष्मप्रोक्तं युधिष्ठिराय श्रावयन् वदति—

शृणु राजन् यथावाक्यमुक्तो राजा सुयोधनः ।
मध्ये कुरूणां राजेन्द्र सभायां तन्निबोध मे ॥
मया विश्राविते वाक्ये जहास धृतराष्ट्रजः ।
अथ भीष्मः सुसंक्रुद्ध इदं वचनमब्रवीत् ॥

इत्युपक्रम्य भीष्मोक्तं वदति —

अन्धः करणहीनत्वान्न वै राजा पिता तव ।
राजा तु पाण्डुरभवन् महात्मा लोकविश्रुतः ॥ इति ।

---

१. राज्ञो धृतराष्ट्रस्यानेके सचिवा आसंस्तेषामेकतमः कणिको नाम ब्राह्मणः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवं कृष्णो भीष्मोक्तानि स्पष्टवचनानि युधिष्ठिरमश्रावयत्।

पश्चात्—

विसृज्य धृतराष्ट्राय राज्यं सविदुराय च।
चचार पृथिवीं पाण्डुः सर्वां परपुरञ्जयः॥

एतेन ज्येष्ठोऽपि करणविकलो न राजा भवितुमर्हति, इत्यपि स्पष्टीकृतम्।

धृतराष्ट्रस्तु पाण्डुना दत्तेन राज्येन राजा बभूव। अथासावन्धः कथं राजकार्याणि निर्वहेदिति तेन द्वयोरुपरि भारो निक्षिप्तः।

कोशसंवनने दाने भृत्यानां चान्ववेक्षणे।
भरणे चैव सर्वस्य विदुरः सत्यसङ्गरः॥
सन्धिविग्रहसंयुक्तो राज्ञां संवाहनक्रियाः।
अवैक्षत महातेजा भीष्मः परपुरञ्जयः॥
सिंहासनस्थो नृपतिर्धृतराष्ट्रो महाबलः।
अन्वास्यमानः सततं विदुरेण महात्मना॥

पाण्डौ मृते माद्रया च सहगमने कृते पाण्डवान् पञ्च गृहीत्वा कुन्ती हस्तिनापुरमागता। युधिष्ठिरो यौवराज्यमवाप। अत्र प्रतिदिनमुपचीयमानबलान् पाण्डवाञ्छ्रुत्वा धृतराष्ट्रश्चिन्तामाप।

श्रुत्वा पाण्डुसुतान् वीरान् बलोद्रिक्तान् महाबलः।
धृतराष्ट्रो महीपालश्चिन्तामगमदातुरः॥

इत एव महाभारतं प्रारभ्यते। पूर्वमुक्तं ज्येष्ठस्य पुत्रस्येन्द्रियविकलत्वे कनिष्ठस्यैव राज्याधिकारः। एवं पूर्वं जातमपि, त्वग्दुष्टं ज्येष्ठं देवापिं राज्याधिकारिणमपि परित्यज्य प्रजाः शन्तनुं राजत्वेनागृह्णन्। देवापिस्तु राज्यलालसां परित्यज्य वनमगमत्। अर्थात् सा नीतिस्तस्यापि राज्यभ्रष्टस्य देवापेर्मान्याऽऽसीत्। सैव नीतिर्यदि धृतराष्ट्रेण पालिताऽभविष्यत्, महाभारतयुद्धमेव नाभविष्यत्।

अथ पाण्डुना न्यासीकृतं राज्यं कथं स्वीयमेव भवेत्, कथमधिकारिणः पाण्डवा राज्यभ्रष्टा भवेयुः, कोऽत्र प्रष्टव्य इति चिन्तायां धृतराष्ट्रो विख्यातान् भीष्मविदुरादीन् नीतिविदस्त्यक्त्वा कणिकं पृच्छति।

धृतराष्ट्रमनसि समुद्भूताऽसूया या तेनैव स्पष्टशब्दैरावेदिता सैव महाभारतेतिहास-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मूलमिति दुर्योधनादीनि पात्राणि तत्प्रेरितानि तदुत्तेजितानीव स्वां स्वां भूमिकां यथावद् अभिनिन्युर्यथाऽऽदिपवर्ण्येवोक्तम् —

दुर्योधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः।
दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रोऽमनीषी ॥

यदा तस्य मनस्यसूया समुत्पन्ना, तदा तेन कणिकः पृष्टः, तस्य मन्त्रिमण्डलेऽयं कूटनीतिज्ञ एको मन्त्री। तेन धृतराष्ट्रायोपदिष्टा कूटनीतिरादिपर्वण्युक्ताऽस्तीत्यग्रे वक्ष्यते। यथा तामेव नीतिमाश्रित्य धृतराष्ट्रः प्रावर्ततेव इति महाभारते द्विविधा नीतिर्दृश्यते, कौरवाणामेका पाण्डवानामपरा।

तयैव कणिकोपदिष्टया दुर्नीत्या प्रभावित इव धृतराष्ट्रः प्रसङ्गे प्रसङ्गे बहिः पाण्डवानां हितायैव प्रवर्तमानमात्मानं प्रादर्शयत्। अन्तस्तु तेषां विनाशायैव प्रावर्तत। नैवामन्यत समये समये विदुरभीष्मादिभिरुक्ताः सन्नीतीः। तदेतद् गजदन्तकम्। इत्थं द्विमुखीं नीतिमाश्रयन् धृतराष्ट्र आत्मनो विनाशमेवाह्वयत्।

स च तत्सूनुदुर्योधनश्च सामदानभेददण्डानुपायान् व्यापारयामासतुः, स्वपक्षं च पाण्डवेभ्योऽप्यतिबलं कर्तुं प्रायतेताम्।

द्रोणेनायोजिते शस्त्रविद्यापरीक्षारङ्गेऽर्जुनेन धनुर्विद्याप्रावीण्य आत्मनः प्रदर्शिते कर्णो रङ्गं प्रविवेश। तेनाप्यर्जुनेन प्रदर्शिता धनुर्विद्याप्रयोगाः प्रदर्शिताः।

धार्तराष्ट्रास्तु शस्त्रास्त्राध्ययनकालेऽपि भीमस्यार्जुनस्य च तत्र वैशिष्ट्यं नामृष्यन्त। ते च कर्णेन प्रदर्शितां धनुर्विद्यां दृष्ट्वाऽर्जुनसमोऽयमस्माकं सहायो भवेद् वरं भवेदिति मनसि कृत्वा तस्य मैत्रीं सम्पादयितुं प्रयता अभवन्। दुर्योधनेनोक्तमपि---

स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद।
अहञ्च कुरुराज्यञ्च यथेष्टमुपभुज्यताम् ॥

तत्र कर्णायाङ्गदेशराज्यं दत्त्वाऽभिषेकः कृतः। एवं कर्णं मित्रं सङ्गृह्य—

दुर्योधनस्यापि तदा कर्णमासाद्य पार्थिव।
भयमर्जुनसञ्जातं क्षिप्रमन्तरधीयत ॥

बलवतां शत्रूणां जयाय बलवान् सहायकोऽपेक्षितः। अत एव कर्णमर्जुनसमं सहायकं लब्ध्वा दुर्योधनस्यार्जुनाद्भयं न्यवर्तत।

कणिकोपदेशात् पूर्वमेव धृतराष्ट्रस्य बुद्धिर्भ्रष्टाऽसीत्।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

तस्य धर्मादपेतस्य पापानि परिपश्यतः ।
मोहादैश्वर्यलोभाच्च पापा मतिरजायत ॥

कणिकोक्तेयं दुर्नीतिः—नित्यं दण्डमुद्यम्य स्थातव्यम् । सर्वाणि कार्याणि दण्डेनैव विधारयेत् । शत्रुर्यदि दीनं वचनं वदति, तथापि हन्तव्यः । कदाचित् सान्त्वेन, कदाचिद् दानेन, कदाचिद् भेदेन, क्वचित् दण्डेन वा हन्तुं शक्यते । केनाप्युपायेन दम्भं वा कृत्वा शत्रुर्हन्तव्यः । उपरि क्रुद्धोऽप्यक्रुद्धरूपः स्यात् स्मितपूर्वाभिभाषी च । न चाऽप्यन्यमपध्वंसेत् कदाचित् कोपसंयुतः ।

प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत ।
प्रहृत्य च कृपायीत शोचेत च सहेत च ॥

इयमेव नीतिर्धृतराष्ट्रेण सपुत्रेण समादृता । कणिकेनोक्तमासीत् —

नित्यमुद्यतदण्डाद्धि भृशमुद्विजते जनः ।
तस्मात् सर्वाणि कार्याणि दण्डेनैव विधारयेत् ॥

अग्रे -

वधमेव प्रशंसन्ति शत्रूणामपकारिणाम् ।
सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितम् ॥
दया न तस्मिन् कर्तव्या शरणागत इत्युत ।
निरुद्विग्नो हि भवति न हताज्जायते भयम् ॥

तथा च—

ततः प्रत्यागते काले भिन्द्याद्घटमिवाश्मनि ।
अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन् ॥
पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
रिपुस्थानेषु वर्तन्तो हन्तव्या भूतिमिच्छता ॥
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥
आशां कालवतीं कुर्यात् कालं विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं वापि हेतुतः ॥

ततो लाक्षागृहादिप्रसङ्गाः समुदभूवन् । या याः कुचेष्टा धार्तराष्ट्राश्चक्रुः, विदुर-मतेन पाण्डवास्तास्ताः प्रतिचक्रुः । पाण्डवानामभ्युदयं दुर्योधनो धृतराष्ट्रायाकथयत् ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वारणावते पाण्डवान् प्रेषयितुं दुर्योधनो धृतराष्ट्रमाग्रहीत्। दुर्योधनोऽर्थमाने सामदानाभ्यां प्रकृतीः पूजयामास। धृतराष्ट्रस्य शासनात् पाण्डवा वारणावतं जग्मुः। दुर्योधनप्रेरितः पुरोचनस्तत्र जतुगृहं निरमासीत्। विदुरेण तद् ज्ञात्वा बोधिताः पाण्डवाः जतुगृहेऽदग्धाः सुरक्षिता वनञ्जग्मुः। विदुरवचनानि यथा—

प्राज्ञः प्राज्ञप्रलापज्ञः प्रलापज्ञमिदं वचः।
प्राज्ञं प्राज्ञः प्रलापज्ञः प्रलापज्ञं वचोऽब्रवीत्॥

इत्यारभ्य

चरन् मार्गान् विजानाति नक्षत्रैर्विन्दते दिशः।
आत्मना चात्मनः पञ्च पीडयन् नानुपीड्यते॥

इत्यन्तम्।

न हि सुजनस्य हृदय उपदिष्टाऽपि दुर्नीतिर्दृढपदा भवेत्। अत एव महाभारते धृतराष्ट्रस्य चतुर्णाञ्च दुर्योधनादीनां स्वभावास्तथा चित्रिता यथा दुर्नीतिरेव तत्र पदं लभेत, न सुनीतिर्विदुरभीष्मादिभिरुपदिष्टा। अत्रापि धृतराष्ट्रवृत्तिर्द्विमुखी दृश्यते।

अत्र स्थले स्थले—

पूर्वं धृतराष्ट्रः धर्म्यं न्याय्यं युक्तियुक्तं वचनमुक्त्वाऽपि दुर्योधनस्यायुक्तानि धृतराष्ट्र-प्रदर्शितयुक्तिप्रतिक्षेपरहितानि वचांस्याकर्ण्य सद्य एव पूर्वं स्वोक्तान्यपि वचनानि परिवर्तयति। पाण्डवानां जतुगृहदाहाद्यहिताय प्रवर्तते, आज्ञापयति च। तावतैव धृतराष्ट्रस्यैव द्वेषासूयापूर्णा मतिरासीदिति निश्चीयते। अत एव भगवान् कृष्णोऽपि सुविचक्षणः मूलं राजा धृतराष्ट्रोऽमनीषी" इत्युक्तवान्।

विदुरोऽपि मन्त्री आसीत्। भीष्मोऽपि तथेति पूर्वमुक्तम्। मन्त्रिणो विदुरस्य चाराः कौरवाणां लाक्षागृहनिर्माणयोजनां विदुरायावेदयन्।

विदितं तन्महाबुद्धेर्विदुरस्य महात्मनः।
ततस्तस्यापि चारेण चेष्टितं पापचेतसः॥

( आदि० अ० १४६। )

एतेन चाराणामुपयोगो राजकार्येषु कियान् वर्तते तद् ज्ञायते। तेन विदुरेणापि स्वसुहृदं खनकं प्रेष्य धार्तराष्ट्रैः पुरोचनद्वारा चिकापिते भवने गुप्तं बिलं कारितम्, म्लेच्छवाचा च बोधितो युधिष्ठिरः। पौरास्तु जतुगृहं दग्धं दृष्ट्वा चुक्रुशुः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

विदिते धृतराष्ट्रस्य धार्तराष्ट्रो न संशयः ।
दग्धवान् पाण्डुदायादान् न ह्येनं प्रतिषिद्धवान् ॥ इति ।

पौराणां नागराणां वचनात् तद् ज्ञात्वा धृतराष्ट्रः सुमहान्तं शोकमधारयत् ।

अद्य पाण्डुर्मृतो राजा मम भ्राता महायशाः ।
तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः ॥

दुर्नीतौ दम्भोऽप्यावश्यकः स्यात् ।

स धृतराष्ट्रो विदुरस्य भीष्मस्य वा सन्निधौ पाण्डवान् स्तौति । परोक्षे तेषां दुर्योधनकर्णदुःशासनशकुनीनां पुरः पाण्डवानामैश्वर्येण स्वस्यानुतापं प्रदर्शयति, सर्वथा दुर्योधनेन निर्दिष्टदिशा दुर्नयेन प्रवर्तमानो धृतराष्ट्रः पाण्डवानामभ्युदयं न सहते स्म । सन्नीत्या प्रवर्तमानाः पाण्डवाः प्रतिप्रसङ्गं धार्तराष्ट्रैरुद्वेजिताः स्वां नीतिं न जहुः । ( तत्रापि युधिष्ठिरस्य वचनानि श्रयणार्हाणि । )

जतुगृहदाहानन्तरं पाण्डवा दग्धा इति सर्वेषु प्रतिपन्नेषु पाण्डवा द्रौपदीस्वयंवरं गच्छन्ति, तत्रार्जुनो मत्स्यवेधं करोति । मातृवंचनाद् व्यासादीनां सम्मत्या पञ्चभिः पाण्डवैः सह द्रौपद्या विवाहो भवति । अत्रापि पाण्डवानां लाभ एव जातो द्रौपद्या द्रुपदधृष्टद्युम्न-प्रभृतीनां सहायकानां सम्बन्धिनाञ्च । ततो धृतराष्ट्रेण पाण्डवा इन्द्रप्रस्थं प्रेषिताः । तेन चिन्तितम्, अत्र हस्तिनापुरे स्थितेषु पाण्डवेषु प्रतिदिनं कुरुपाण्डवयोः संक्षोभो भवेत् । हस्तिनापुरस्थस्य पाण्डवेषु इन्द्रप्रस्थं यातेषु स न भविष्यति । अर्धं राज्यं क्रमेण ममैव भविष्यति, लोकाः पाण्डवान् विस्मरिष्यन्तीति । किन्तु तत्र प्रयातैः पाण्डवै राजसूयः क्रतुरारब्धः । युधिष्ठिरश्चक्रवर्ती अभवत् । पाण्डवानामेव महत्त्वमवर्द्धत । श्रीकृष्णश्चाग्रपूजां पराञ्च श्रियं लेभे । तेन दुर्योधनः पर्यतप्यत् । कथं पाण्डवानां पराभवः कर्तव्य इति चिन्तयन् शकुनिना बोधितः—

यामेतामतुलां लक्ष्मीं दृष्टवानसि पाण्डवे ।
तस्याः प्राप्तावुपायञ्च शृणु सत्यपराक्रम ॥
अहमक्षेष्वभिज्ञातः पृथिव्यामपि भारत ।
हृदयज्ञः पणज्ञश्च विशेषज्ञश्च देवने ॥
द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम् ।
आहूतश्चैष्यति व्यक्तम्.............. ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कपटपटुना शकुनिनोक्तम् युधिष्ठिरो धूतप्रियो वर्तते, अथ च देवितुं न जानाति। 'सैषा कणिकनीतिः'—तेन पूर्वमेवोक्तमासीत्

नास्य च्छिद्रं परः पश्येच्छिद्रेण परमन्वियात्।
परस्य छिद्रं ज्ञातव्यं छिद्रेण हन्तव्य इति॥

छिद्रान्वेषी शकुनिर्ज्ञातवान् यद्—युधिष्ठिरो द्यूतेन देवितुं न जानाति। द्यूतञ्चास्य प्रियं वर्तते। युधिष्ठिरे धर्मप्रियत्वं न्यायप्रियत्वमित्यादिषु गुणेषु सत्स्वपि हृदयदौर्बल्यं प्रतिपदं दृष्टिपथमायाति शिथिलहृदयस्य तस्योत्तेजनाय द्रौपदी च भीमश्च पुनः पुनर्वाक्छरैस्तक्ष्णुतः। दृष्टं चैतद् वनपर्वणि, किरातार्जुनीये प्रथमे सर्गे द्वितीयेऽपि च।

**महाभारते भ्रातृस्नेहः**

महाभारते नायकप्रतिनायकयोर्द्वौ पक्षौ विलोक्येते। उभयोरपि पक्षयोर्भ्रातृस्नेहः समान एव। पाण्डवपक्षे भीमादयश्चत्वारो भ्रातरो युधिष्ठिरवचनं नातिवर्तन्ते। तथा कौरवपक्षे दुःशासनाद्यो दुर्योधन सर्वदैवानुवर्तन्ते।

हृदप्रविष्टं दुर्योधनं विविधैर्नृशंसवचनैर्युधिष्ठिरो निरभर्त्सयत्, अवदच्चास्माकं पञ्चानां केनाप्येकेन सह युद्धयस्व। एकस्मिन्नपि पराजिते सर्वे वयं पराजिता भविष्यामः। तच्छ्रुत्वा कृष्णः क्रुद्धः सन्नवदत्—राजन्! किमेतत् त्वयोक्तम्। दुर्योधनो गदायुद्धपटुः, तथा न नकुलः सहदेवो वा। यदि तयोरेकतरेणासौ गदायुद्धं प्रार्थयिष्यते, सर्वथा वयं पराजिता भविष्यामः। अत्र युधिष्ठिरस्य स्वभ्रातृष्वसाधारणो विश्वासो गम्यते।

राज्ञा चिन्तनीयानि सप्ताङ्गानि पूर्वमुक्तानि—

आत्माऽमात्याश्च कोशश्च दण्डी मित्राणि चैव हि।
तथा जनपदाश्चैव पुरञ्च कुरुनन्दन॥
(शान्तिपर्व०)

आमूलतो वर्तमानमहाभारतप्रसङ्गानां पाण्डवसम्बन्धिनां विमर्शे क्रियमाणे तत्र प्राचुर्येण भगवतः कृष्णस्यैव बुद्धयोपदेशेन वा पाण्डवानां प्रवृत्तिर्लक्ष्यते। कृष्णस्य सम्बन्धः काम्पिल्यनगरे द्रौपदीस्वयंवरादारभ्य प्रवर्तमानो दृश्यते। तदा प्रभृति द्यूतप्रसङ्गमुज्झित्वा सर्वेषु प्रसङ्गेषु कृष्णस्यैव नायकत्वमिव लक्ष्यते। द्रौपदीकेशाम्बराकर्षणादनन्तरं प्रतिप्रसङ्गं कृष्णबुद्धयैव प्रेरिताः पाण्डवाः प्रववृतिरे। यथा कृष्णबुद्धया कृष्णसाहाय्येन प्रवृत्तावेवास्माकं विजयो भविष्यतीति निश्चयेनेव पाण्डवाः सर्वाणि कार्याणि चक्रुः। द्यूतक्रीडायामेव

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कृष्णस्य न साहाय्यं गृहीतम्, न चाभिप्रायः पृष्टः। केवलं युधिष्ठिर एव स्वमत्या द्यूतक्रीडायां प्रवृत्तः। पितृवत् परिगणितस्य धृतराष्ट्रस्याज्ञा पालनीया, अथवा राजसूये विधिप्राप्तं द्यूतं न परिहार्यमिति मत्वा परमहितैषिणि भगवति कृष्णे द्वारकायां प्रयाते हस्तिनापुरे द्यूतं प्रवृत्तम्। यदि द्यूतप्रसङ्गे पाण्डवैः कृष्णस्याभिप्रायः पृष्टोऽभविष्यत्, भगवता कृष्णेन सम्मतिः प्रदत्ता स्यान्न वेति न निश्चयेन वक्तुं शक्नुमः। तथाऽपि कपटमयेऽपि तस्मिन् प्रसङ्गे यदि कृष्णः पाण्डवानां सहायत्वेनोपस्थितोऽभविष्यत्, नूनं धार्तराष्ट्राणां पराजयाय कोऽप्युपाय उपदिष्टोऽभविष्यत्। न हीयता साकल्येन पाण्डवाः पराजिता अभविष्यन्।

अयमर्थः पश्चात् पाण्डवैरपि विज्ञातः स्यात्, अत एव विष्टिप्रसङ्गेऽन्यान् सम्बन्धिनो विहाय पाण्डवैः कृष्ण एव आहूतः। यद्यप्यर्जुनस्य सहदेवस्य नकुलस्य भीमस्याऽपि बुद्धिमत्ता नासीदिति वक्तुं न शक्यते। किन्तु ज्येष्ठभ्रातुर्युधिष्ठिरस्याग्रे तेऽनुजाः किमपि वक्तुं न शक्नुवन्ति स्म। यदि कश्चिद् युधिष्ठिरमपि प्रभवति, स कृष्ण एव। अत एवोद्योगपर्वत आरभ्य पाण्डवानां प्रसङ्गेषु कृष्णस्यैव नायकत्वमिव लक्ष्यते। विष्टिप्रसङ्गे कौरवराजसभायां कृष्णवचनं श्रोतुमनेके महर्षयोऽपि स्वं स्वमाश्रमं परित्यज्याऽपि तत्र समुपस्थिता आसन् सशिष्याः। ईश्वरावतारत्वेन कृष्णे श्रद्धा जनताया स्यात्, अथवा मास्तु वा; किन्तु राजनीतिज्ञमहापुरुषत्वेन भगवान् कृष्णः सर्वैः सम्भाव्यमान एवाऽऽसीत्।

तस्यैव कृष्णस्य 'कौरवाः पराजेतव्या हन्तव्याश्च' इत्येव बुद्धिरभवत्। तयैव बुद्ध्या अर्जुनस्य सारथित्वं स्वीकृतम्। युद्धे निविवृत्सावर्जुने गीतामुपदिश्य समर्थैः शब्दैः कृष्ण एव तं न्यरुणत्, युद्धे ऽयूयुजच्च। भीष्मस्य द्रोणस्य कर्णस्य सर्वेषां महारथानां वधः कृष्णबुद्ध्यैव कृष्णप्रेरणयैव महाभारते लक्ष्यते। यदा यदा च युद्धनियमान् पाण्डवा अत्यक्रामन्, तदा तदा कर्णस्यान्येषाञ्चोपालम्भान् भगवान् कृष्ण एव उदतीतरत्। द्यूते पाण्डवानां पराजये पाण्डवापेक्षया कृष्णस्यैव कौरवेषु समधिको दोषो दृश्यते। तच्चाग्रे कर्णस्य रथचक्रे भूम्या ग्रस्ते 'रथस्थेन भूमिष्ठस्य हनने न धर्मः' इति कर्णेनोक्ते तदुत्तररूपेण भगवता कृष्णेनैव 'क्व ते धर्मस्तदा गतः' इत्यादिश्लोकाः कथिता इत्यत्र स्फुटीभविष्यति।

गुणिजनोपसंग्रहः

कौरवाणां पाण्डवानाञ्च शस्त्रास्त्रविद्यापरीक्षणकालेऽपरिचितस्य राधेयस्यास्त्रविद्याकौशलं दृष्ट्वा स्पर्धालुर्दुर्योधनस्तस्योपसंग्रहे सत्वरमेवोद्यतोऽभवत्। इति तु तेन किमपि चातुर्यं प्रदर्शितम्। परीक्षाप्रसङ्गेऽर्जुनस्य सर्वतोऽधिकगुणवत्तामालोच्य समुपस्थिते काल इमे पाण्डवाः जेतुं शक्या न भविष्यन्ति, अतोऽस्माकमपि पक्षे कश्चिदेवंविधगुणवानेवावश्यकः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तदयमेवापरिचितः पाण्डवानामपि गुणवत्तया समुपजातसौहार्दैः पाण्डवैः संगृह्येत, तत् प्रागेवास्माभिरेवायं स्वपक्षे संग्रहीतव्यः। इति सम्प्रधार्य सद्य एवोत्थाय तमालिङ्ग्याङ्गदेशे तमेव राजानमुद्घोषितवान्। इत्येतद् दुर्योधनस्य नीतिकुशलत्वमावेदितम्।

पाण्डवैस्तु स्वपराक्रमदर्पाविष्टैः स उपेक्षितः, तेन पाण्डवानामभिप्रायद्वयमनुमीयते। अर्जुनपराक्रमं दृष्ट्वा यद्यसौ गुणपक्षपाती स्यात्, 'समानशीलव्यसनेषु सख्यम्'इति न्यायेन अर्जुनेऽनुरक्तो भवेदित्येकोऽभिप्रायः पाण्डवानां कर्णोपसंग्रहे उदासीनत्वे। अन्यश्च, विरक्तो वा एष किं करिष्यति 'क्रियासिद्धिः सत्त्वे फलति महतां नोपकरणे' इत्यभिप्रायेण वा कर्णोपसंग्रहे पाण्डवा उदासीना अभवन्। नान्येषां पराक्रममाश्रित्य सम्प्राप्तो विजयो विजयो भवेत्। तदुक्तं भारविणा—'मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयं हतैः' इति द्वितीयं कारणं कर्णोपेक्षायामनुमीयते। कर्णस्तु दुर्योधनेन सत्कृतो यावज्जीवं तस्मिन्नेवानुरक्तोऽभवदिति तस्य महानुभावता स्पष्टं दृश्यते। यद्यसौ कर्णः कौरवपक्षपाती नाभविष्यत्, सम्भाव्यते महाभारते युद्धमपि नाभविष्यत्। भीष्मद्रोणयोः पराक्रमे दुर्योधनस्य न तावती श्रद्धाऽऽसीत्, यथा कर्णपराक्रमे। अत एव भीष्मद्रोणौ भीमश्च कलहमूलत्वेन कर्णमेवाशङ्क्य तत्र तत्र प्रसङ्गेषु तमेव भर्त्सयाञ्चक्रुः। अत एव च यथा यथा ते कर्णमभ्यनिन्दन्, तथा तथा कर्णस्य दुर्योधनानुरागः प्रबलोऽभवत्, अन्येषु च तिरस्कारः। एकतः कौरवपक्षे यथा कर्णो मुख्यं पात्रमस्ति, तथा पाण्डवपक्षे भगवान् श्रीकृष्णः मुख्यपात्रत्वेन ततोऽप्यधिकं महत्त्वमावहति। तत्रापि नीतिपाटवे भगवान् श्रीकृष्णः कर्णं भीष्मादींश्चातिशेते, तत्र न कोऽपि संशयः।

मत्स्यवेधप्रसङ्गे मत्स्यवेधकर्तारमर्जुनमाकलय्य सद्य एव ब्राह्मणवेशधारिणां पाण्डवानां पञ्चसंख्यया, लोकोत्तरसभ्यव्यवहारसम्पन्नतया, तेजस्वितया च श्रीकृष्णस्तानिमे पाण्डवा इत्यवधारयामास।

अर्जुनेन मत्स्यवेधे कृते द्रौपदीं नीत्वा पाण्डवेषु स्वस्थानं गतेषु प्रथममेव बलरामसहितः कृष्णस्तानन्वयासीत्, 'जानामि युष्मानहम्' इत्यावेदयितुम्। अन्येषां तथाभिज्ञानं मा भूदिति तावुभावपि सद्य एव निववृताते। कतिपयसमयानन्तरं वस्त्रैराभूषणैर्वाहनैर्दासदासीभिश्च तान् सत्करोत्। एष पाण्डवकृतकृष्णोपसंग्रहः, उत कृष्णकृतः पाण्डवोपसंग्रहः?

दुष्टानां विनाशायावतीर्णस्य न कश्चित् क्षत्रियः सहायकोऽभवत् भगवतः कृष्णस्य ऋते पाण्डवान्। तद्द्वारा जरासन्धादीनां कौरवाणाञ्च क्षयो भविष्यतीत्यवगत्य कृष्णेन पाण्डवद्वाराऽनेके राजानो हताः। तदुक्तं भागवते—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ये वा मृधे समितिशालिनि आत्तचापाः
काम्बोजमत्स्यकुरुकैकयसृञ्जयाद्याः ।
यास्यन्त्यदर्शनमलं बलभीमपार्थ-
व्याजाह्वयेन हरिणा निलयं तदीयम् ॥

एतैश्च प्रसङ्गैः स्वबलवर्धनाय बलवतां गुणीनां संग्रह आवश्यक इति महाभारतमावेदयति। यद्यत्र काऽपि क्षतिर्भवति, न तत्र विजयः। कौरवपक्षपाती कर्णः पाण्डवपक्षपाती कृष्ण उभावपि सममेव महत्त्वमूहतुः। तत्राऽपि कर्णस्य सन्निकृष्टवर्तित्वं कृष्णस्य च विप्रकृष्टवर्तित्वमित्येतत् सर्वं पूर्वं कौरवाणामुन्नतौ पाण्डवानाञ्चावनतौ कारणं तर्क्यते। यदि कर्णवत् श्रीकृष्णोऽपि पाण्डवानां सन्निकृष्टवर्त्यभविष्यत्, तदा द्यूते शकुनेर्विजयोऽभविष्यद्, न वा? इत्येतदस्ति चिन्तास्पदम्।

पाण्डवानां कर्णे उदासीनत्वेऽर्जुनस्य स्वपराक्रमगर्वोऽपि कारणं भवेत्। येन गर्वेणार्जुनः कदाचिद् बलरामं कृष्णं तत्पुत्रं प्रद्युम्नमप्यवशासीत्। एष प्रसङ्गः श्रीमद्भागवते दशमस्कन्ध एकोननवतितमेऽध्याये समुपनिबद्धः। यथा द्वारकायां वर्तमानोऽर्जुनः कस्यचिद् ब्राह्मणस्याष्टसु पुत्रेषु मृतेषु नवमोऽपि जातमात्रो मृतः, तं मृतं पुत्रमादाय स ब्राह्मणः कृष्णसभायामागत्य क्षत्रियतिरस्कारपूर्वकं मृतं पुत्रं सभायां कृष्णरामादिषु स्थितेष्वर्जुनेऽपि स्थिते तत्पुरः प्रक्षिप्य सोऽवदत्—

ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः।
क्षत्रबन्धोः कर्मदोषात् पञ्चत्वं मे गतोऽर्भकः।

तच्छ्रुत्वापि तूर्ष्णीं स्थितेषु कृष्णरामादिषु स्वपराक्रमदर्पवशादर्जुनः—
'किंस्विद् ब्रह्मन् त्वन्निवासे इह नास्ति धनुर्धरः'

अहं प्रजां रक्षिष्ये। तदा ब्राह्मणेनोक्तम्—अत्र रामः कृष्णः प्रद्युम्नश्च वर्तन्ते, ते यदि न रक्षन्ति, त्वं कथं मत्पुत्रं रक्षिष्यसि। तदार्जुनोऽवदत्—

नाहं संकर्षणो ब्रह्मन् न कृष्णः कार्ष्णिरेव च।
अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः॥
माऽवमंस्था मम ब्रह्मन् वीर्यं त्र्यम्बकतोषणम्।

अस्मिन् प्रसङ्गेऽर्जुनस्य स्वपराक्रमदर्पः स्पष्टं प्रतीयते। अनेन दर्पेण पाण्डवानां कर्णे औदासीन्यं सहेतुकं प्रतीयते। तस्यैव दर्पस्य निर्वाहाय द्रुपदनगरे पाण्डवाः कृष्णरामयोरावासं

CC-0. Sampurnanand University Collection. Digitized by eGangotri

न गच्छन्ति, किन्तु तावेव पाण्डवानामावासमाजग्मतुरिति महाभारतकारेणोपनिबद्धम्। इदमपि ज्ञायते समुचितो याथार्थ्यानुगतो दर्पस्तादृशस्यैवेतरस्य न क्षोभाय भवति, अपि तु संतोषाय भवति। सात्त्विकश्च स दर्पः कृष्णरामावप्याकर्षति। गीतायामप्येतत् सर्वं भगवता स्मारितम्।

यथा—

अकीर्तिं चाऽपि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते॥

(भ० गी० २।३४)

एवं कृष्णवचनैस्तत्रापि तत्त्वज्ञानसीमासदृशैः श्रीमद्भगवद्गीतावाक्यैरर्जुनः स्वां प्रकृतिमापन्नो युद्धाय समुद्यतः। नूनं यथा रामायणं भारतस्य कीर्तिमन्दिरसुवर्णकलशायमान वर्तते, तथा महाभारतमपि भारतकीर्तिमन्दिरे विजयध्वजायते। उभयत्र वर्णिताया राजनीतेः परिशीलनेनाद्यापि भारते राजपुरुषा भारतं पुनरप्युन्नतेः शिखरमारोपयेयुरिति निश्चप्रचं वक्तुं शक्यम्।





CC-0. Sampurnanand University Collection. Digitized by eGangotri

## तृतीयं प्रवचनम्

महाभारते कुटिलनीत्याऽधिकं स्थानं लब्धमासीत्। रामायणे स्वयमागतं राज्यं मन्त्रिपुरोहितैरनुमतं रामेणाप्याज्ञप्तो भरतो न स्वीकृतवान्। भारते दुर्योधनादयो न्यायेनाप्राप्तं राज्यं द्यूतादिकुटिलनीत्या युधिष्ठिरादाच्छिद्य जिघृक्षाम्बुभूवुः।

महाभारते यथा कणिकेन दुर्नीतिरुक्ता, तथा रामायणेऽपि जाबालिना राज्यग्रहणाय रामो बोधितः। कणिकोक्ता नीतिर्धृतराष्ट्रस्य प्रियाऽभवत्। जाबालिनोक्तानि वचनानि रामहृदये स्थानं नालभन्त। क्रुद्धं रामं वसिष्ठोऽसान्त्वयत्। इमानि तानि जाबाल्युक्तानि वचनानि—भरतमाश्वास्यायोध्यां प्रति प्रेषणोत्सुकं रामं जाबालिरवदत्—

साधु राघव मा भूत्ते बुद्धिरेवं निरर्थिका।
प्राकृतस्य नरस्येव ह्यार्यबुद्धेस्तपस्विनः॥

अत्र जाबालिर्वदति—इयं राज्यपरित्यागाय ते बुद्धिः प्राकृतजनोचिता, आर्यबुद्धेस्तव मा भूत्। अग्रे—

कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित्।
एको हि जायते जन्तुरेक एव विनश्यति॥
तस्मान्माता पिता चेति राम सज्जेत यो नरः।
उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित्॥
यथा ग्रामान्तरं गच्छन्नरः कश्चिद् बहिर्वसेत्।
उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि॥
एवमेव मनुष्याणां पिता माता गृहं वसु।
आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः॥

एतेन फलितमिदम्

पित्र्यं राज्यं समुत्सृज्य स नार्हसि नरोत्तम।
आस्थातुं कापथं दुःखं विषयं बहु कण्टकम्॥

एवं तत्त्वज्ञानवैराग्योचितानि वाक्यान्युक्त्वा पश्चाद्रामं राज्याय प्रलोभयति—

न ते कश्चिद् दशरथस्त्वं तु तस्य न कश्चन।
अन्यो राजा त्वमन्यस्तु तस्मात् कुरु यदुच्यते॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ततोऽग्रे तेन चार्वाकोचिताः सिद्धान्ता अपि प्रदर्शिताः । यथा--

अष्टका पितृदैवत्यमित्ययं प्रसृतो जनः ।
अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥
यदि मुक्तमिहान्येन देहमन्यस्य गच्छति ।
दद्यात् प्रवसतां श्राद्धं न तत् पथ्यशनं भवेत् ॥
दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः ।
यजस्व देहि दीक्षस्व तपस्तप्यस्व सन्त्यज ॥
प्रत्यक्षं यत् तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥

एतत् सर्वं श्रुत्वाऽपि भगवतो रामस्य मनसि न कोऽपि प्रभावः पतितः । अन्यत्र महाभारते धृतराष्ट्राय कणिकेन कूटनीतिरुपदिष्टा, सा तत्र पदं लेभे (या पूर्वव्याख्याने कणिकवचनैरेवोद्धृता)। अत एव

विनीत विनयस्यापि प्रकृतिर्न विगीयते ।
प्रकृतिं गूहमानस्य निश्चयेन कृतिर्ध्रुवा ॥

रामायणे भरतो राज्यं न गृहीतवान् ।

वचनपालनविषयेऽपवादविकल्पप्रातिनिध्यादीनामाश्रयणं तथा रामायणे न दृश्यते, यथा भारते दृश्यते । अर्जुनस्य प्रतिज्ञासीत्—यो गाण्डीवं निन्दति स हन्तव्य इति । युधिष्ठिरेणैव गाण्डीवस्य निन्दा कृता, अर्जुनस्तं हन्तुमुद्यतः । ततश्च सर्वेषामेव विनाशः । तद् दृष्ट्वा भगवान् कृष्णो वधस्य विकल्पत्वेनाधिक्षेपमुपादिशत् । ततो ऽर्जुनेन युधिष्ठिरस्याधिक्षेपः कृतः । एवं महाभारते क्वचित् क्वचिदेवंविधापवादविकल्पाश्रयणं दृश्यते ।

तथा कैकेयी सर्वैरपि निन्दिता, वसिष्ठेन च कुलपांसनी-पतिघ्नीत्यादिशब्दैस्तिरस्कृता यस्यार्थे तया राज्यमाकाङ्क्षितम् तेन भरतेनापि गाढमवमता, तथापि लोकानां कृते सम्मानार्हेति किं वक्तव्यम् ? यश्च विशिष्टगुणवान्, विशिष्टपराक्रमः, विशिष्टशुभाचारो विशिष्टो विद्वान्, स न केवलं मातापित्रोः सम्पत्तिः, न केवलं कुटुम्बस्य सम्पत्तिः, किन्तु सर्वस्याऽपि राष्ट्रस्य सम्पत्तिः । स च तादृशो विशिष्टगुणायनं न केवलं स्वस्य, स्वकुटुम्बस्य, अथवा स्ववंशस्यैव हिताय प्रवर्तते, किन्तु सर्वस्यापि जगतो हिताय । अत एव महात्मनामिदमसाधारणं विशेषणं श्रूयते "सर्वभूतहिते रताः" । अत एव तं सर्वेऽप्यस्माकमेवायमिति स्वीकुर्वन्ति, न केवलं

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तत्तद्देशाभिजना एव। तथा भगवन्तं रामं न केवलमयोध्यावासिन एव पूजयन्ति, किन्तु समग्रमपि भारतं पूजयति। एवं भगवन्तं कृष्णमपि न केवलं मथुराभिजनाः, अथवा द्वारकावास्तव्या पूजयन्ति, किन्तु समग्रमपि भारतं तं पूजयति। एवं सर्वेषामुदारचरितानां महात्मनामिदं विशेषणं चरितार्थं भवति 'सर्वभूतहिते रताः' इति।

अयमेव विशेषस्तेषां महात्मनां व्यतीतेष्वपि परःसहस्रेषु संवत्सरेषु पूजनार्हत्वे स्मरणार्हत्वे वा। तयोः कृष्णरामयोः सर्वभूतहिते रतयोः स्मरणेन पापेष्वेव, अशुभेष्वेव, निन्द्येष्वेव तिरस्कारवृत्तिरुदेति, विशेषेण तु सर्वभूतहितैव मनोवृत्तिरुदेति। अत एव तयोः परमेश्वरत्वं तिष्ठतु नाम, किन्तु तादृश्यां मनोवृत्त्यां सञ्जातायां प्राणत्यागः सुखेनैव भवेदित्यार्यधर्मशास्त्राणि सर्वदैव तयोर्नामकीर्तनमुपदिशन्ति। स्थाने खल्वेतत्। या च पापेषु, अहितेषु तिरस्कारवृत्तिः, सा नामकीर्तनादेव गौणतामापद्यते, न हि विशेषेण मनःक्षोभं जनयति।

भगवान् रामोऽपि जगतः क्षेमायावतीर्णो विष्णुर्भगवान्। स यदि गृह एवावतिष्ठेत, तदा राक्षसानां विनाशः कथं स्यात्? आत्मनः सुखं विनाश्य जगतः सम्पत्तिं जगते प्रयच्छन्ती कैकेयी कथं न स्तुतिमर्हति? एवं भगवान् रामोऽप्यात्मनः सुखानि संपरित्यज्य जगद्धिताय वनं गच्छन्नवश्यं भूयसीं स्तुतिमर्हत्येव। यद्यहं पितुरवज्ञां करिष्यामि, अग्रे जगति जनाः पित्रोरवज्ञां कृत्वा सुमहान्तं संक्षोभं जनयिष्यन्तीति विचार्य वनं गच्छन् सर्वभूतहितमेवोपदिष्टवानिव।

किमिदानीं द्रक्ष्यामो वयं महाराजं रामम्? इदानीन्तु "त्वमन्यस्मिन् गृहे निवासं कुरु" इत्यपि पित्रोक्ते नान्यद् गृहं पुत्रो गच्छति, किन्तु केनापि वाकीलेन सम्मन्त्र्यास्मत्पितुर्वृद्धावस्थया बुद्धिर्विलुप्ताऽस्ति—इत्येवोद्घोषयति।

इदमप्यत्रावधेयं भवति यद् विकासक्रमानुरोधेन मतिविकासः प्रतिदिनमुपचयमेतीति प्रायेण विवेकशीला मानवाः समवधारयन्ति। किन्तु यथा वयमनुभवामः, मतेरेव विकासो भवति, नीतिस्त्वपचीयत एव। मतिविकासेनेदानीं जनः स्वार्थोन्मूलितसौहृदो दृश्यते, तेन न तेषामप्यैकमत्यमस्मिन् युगे साधयितुं शक्यते। नीतिविकासेन तत् सुकरमेव भवति। तत्र यद्यपि कष्टं सोढव्यमापतति, तथापीतरेषां जनानामसम्भ्रमेण सुखमयजीवननिर्वाहात् तनुतरप्रयत्नसम्पाद्य एवासीत् स नीतिविकासः।

रामायणे सीतां त्यजता भगवता रामेण नोचितमाचरितमिति सर्वेऽपि प्रयतन्ते। कविकुलगुरुणा कालिदासेन रघुवंशे सीतामुखेन वर्णितम् "श्रुतस्य किं तत्सदृशं कुलस्य" नाम सीतापरित्यागो भगवतो रामचन्द्रस्य श्रुतस्यानुचितः, कुलस्याऽप्यनुचित एव। तथा वाल्मीकिना

CC-0. Sampurnanand University Collection. Digitized by eGangotri

"अस्त्येव मन्युर्भरताग्रजे मे" इति कथापयता कविकुलगुरुणा वाल्मीकिमन्युपात्रत्वे भगवतो रामस्य निर्देशः कृतः। परन्तु अतिनिपुणतयाऽवधेयो भवति सन्दर्भस्तत्रत्यः। चारमुखात् सीताविषयकमपवादं श्रुत्वा रामः सुहृदोऽपृच्छत्, तैश्चैवमुक्तम् —

"प्रत्यूचू राघवं दीनमेवमेतन्न संशयः।"

भविष्यति काले प्रजासु प्रतिगृहमेवंविधाः प्रसङ्गा मा उद्भूवन्, कदाचिदुद्भूते तथाविधप्रसङ्गे स्वदोषावरणाय प्रजा एवं जानकीप्रसङ्गं मा समुपन्यस्यन्निति सीतात्यागप्रसङ्गो नातिगर्हानिमित्तम्। अद्यत्वेऽपि कश्चित् प्रमाणितापराधो घातुको गलपाशेन व्यापाद्यते, तत्र न्यायमूर्तेर्न तस्मिन् कश्चिद् प्रद्वेषः, किन्त्वन्ये तथा मा कुर्युरितीतरेषां शिक्षणायैव तस्य व्यापादनमगर्ह्यं भवति। तथा सीतापरित्यागविषयेऽपि। यद्यपीयान् विशेषो वक्तुं शक्यते, प्रमाणितापराधान्विता सीता यदि स्यात्, तदा परित्यागो न निन्दाहेतुः। किन्तु प्रमाणितपावित्र्याया अपि सीतायाः परित्यागो निन्दाहेतुर्भवत्येव। तथापि वह्निप्रवेशरूपं शुचितानिदर्शनं केवलं रामस्यैव प्रत्यक्षविषयमासीत्, नान्येषाम्। न्यायाध्यक्षो न कस्यचित् साक्षी भवति, असाक्षी वा। तेन तटस्थरूपेणैव निर्णयः कर्तव्यो भवति; न किञ्चिद् विजानतेव तदपि कविकुलगुरुणा सीतामुखादुक्तमस्ति—

"वाच्यस्त्वया मद्वचनात् स राजा
वह्नौ विशुद्धामपि यत्समक्षम्।
मां लोकवादश्रवणादहासीः"

एकतो जानकी शुचिता प्रत्यक्षम्, एकतश्च लोकवादः। प्रत्यक्षं न्यक्कृत्यापि लोकवादस्यैव महत्त्वं भगवता रामेण संस्थापितम्। तत्रायं हेतुः "राजा" इति। यदि लोकं नाद्रियेत स कस्य राजा भवति। अत एव श्लोके 'राजपदं' रामस्य निर्दोषत्वसूचनायैव सीतया प्रयुक्तं स्यादित्यपि सुवचम्।

अद्यापि सीतायाः परित्यागप्रसङ्गः केषाञ्चन मते रामस्यालोकसेवाविषयकं भव्यं निदर्शनमभिव्यनक्ति; अन्येषाञ्च केषाञ्चन मते रामस्यातिभीरुता, अत्याचारो दुर्नयश्चाभिव्यज्यते। अद्यत्वे तत्तद्राज्येषु पदाधिकारिणो राम इव त्यागवृत्तिमाद्रियेरन्, ध्रुवमद्यैव सत्ययुगसूर्योदयः स्यात्, किन्त्वधिकारिणो रामायणनीतिं परित्यज्य महाभारतीयां कौरवनीतिं समाद्रियन्ते, यथा दुर्योधनः सर्वमपि राज्यं ममैव स्यात्, न पाण्डवानां किञ्चनमात्रमपि।

अत एवाद्य रामायणस्य प्रचारो यथाऽऽवश्यकः, तथा पूर्वं स्यान्न वेति को जानीते? एतदनुसंधायैवोक्तमस्ति "कलौ नास्त्येव नास्त्येव गतिरन्यथा।" सन्मार्गानुसरणे कानिचिद्

CC-0. Sampurnanand University Collection. Digitized by eGangotri

दुःखानि सोढव्यानि भवन्ति। तथापि सन्मार्गानुसरणसञ्जातसुखेन तानि सुखायन्ते। यथा रामायणे रामरावणयोर्नायक-प्रतिनायकत्वञ्च, तथा महाभारत एककुलोद्भवानां पाण्डवानां कौरवाणाञ्च नायक–प्रतिनायकत्वञ्च प्रसिद्धम्। यथा रामायणे मारीचः कपट-प्रयोगे द्वारभूतः, तथाऽत्र शकुनिः। रामायणे भगवान् रामो नायक एवास्ति, महाभारते भगवान् कृष्णो न नायकः, तथापि नायक इव तत्र तत्र दृश्यते।

द्रौपदीस्वयंवरे मत्स्यवेधप्रसङ्गे पाण्डवैः सह भगवतः कृष्णस्य प्रथमः परिचयः सञ्जातः। तत्रोपस्थितेष्वनेकेषु राजसु कृष्ण एव 'इमे पाण्डवाः' इत्यपूर्वदृष्टान् विप्रवेषेण स्थितान् पाण्डवानभ्यज्ञासीत्।

इयता प्रसङ्गेनापि कृष्णस्य सहजमिङ्गितज्ञत्वं स्फुटीभवति। तेषां निवासस्थले कुम्भकारगृहे गत्वा तेभ्यः कानिचिद् वस्तून्युपायनत्वेन दत्त्वा पूर्वन्तु कृष्णः प्रतिनिवर्तते। तदारभ्य परिचयो वर्धते। पश्चाद्राजसूयप्रसङ्गे पाण्डवानां मार्गदर्शको भूत्वा भीमसेनद्वारा जरासन्धं घातितवान्। इतः प्रभृति कृष्णस्य नीतिः स्फुटीभवति, यया तस्य सर्वत्र विजय एवावलोक्यते। शत्रूणामेकैकशः कृत्वा हननम्, यथा च तेषां संहतिर्न भवेत् तथैकैकशो हननम्, शत्रोः प्रहारात् पूर्वमेव तेषु प्रहृत्य तेषां मनसो दुर्बलीकरणमिति द्वयमेव कृष्णविजयेषु हेतुभूतं दृश्यते। तेन कंसः, जरासन्धः, शिशुपालः, कालयवनादय एकैकशः कृत्वा घातिताः, स्वकीया नगरी द्वारका भयरहिता चैव स्थापिता। कंसादुद्विग्नानां यादवानां कंसवधमेवेच्छतां मध्ये सर्वेषां पश्यतां कंसो हतः। केवलमष्टा एव कंसस्य भ्रातरो युद्धाय समुपस्थिताः, तांश्च बलवतां श्रेष्ठो बलदेवो हतवान्। पाण्डवाः कौरवाश्च यदि संहता भवेयुः, तदा देवानामपि दुर्जयाः स्युः। तेषां परस्परं विरोधोऽपि कृष्णस्य विजये महत्त्वपूर्णं कारणमभूत्। राजसूययज्ञ-प्रसङ्गे दुर्योधनस्यावहेलनायां जातायामेतेषां परस्परं वैरं वर्द्धिष्यत इति कृष्णः परं मुमोद। तेन युधिष्ठिरस्य राजसूयकर्तृत्वेन वर्धमानं बलमवलोक्य न कोऽप्यत्र शिशुपालस्य पक्षं श्रयेदिति विचिन्त्यैव सभामध्ये शिशुपालो हतः। तदा भीष्मादयः कौरवपक्षपातिनोऽपि शिशुपालेऽमर्षयुक्ता आसन्, नैकोऽपि तत्र शिशुपालपक्षपाती अभवत्। अतः सुखेन शिशुपालोन्मूलनं संवृत्तम्। जरासन्धशिशुपालौ संहतौ दुर्जयौ स्यातामिति तयोः संहतेः प्रागेव भीमार्जुनाभ्यां सहितो गिरिव्रजं जरासन्धनगरं गत्वा युद्धं याचित्वा भीमसेनेन घातितः। सोऽपि तत्र स्वनगरे एकाकी एवासीत्।

वनवासप्रसङ्गे द्वादशवर्षेषु विराटनगरे अभिमन्योर्विवाहप्रसङ्गे स्वपित्रा वसुदेवेन, स्वाग्रजेन, प्रद्युम्नेन च सहित उपस्थितो भूत्वा पाण्डवानां युद्धोत्साहं समदीपयत्। विवाहे संवृत्ते

CC-0. Sampurnanand University Collection. Digitized by eGangotri

द्वारकां प्रति न्यवर्तत। यस्य च प्रागेव युद्धस्यामन्त्रणं लप्स्ये, तस्य सहायको भविष्यामीति स्वमतमपिप्रथत्। दुर्योधनार्जुनाभ्यां युगपदेवामन्त्रणे कृते दुर्योधनपक्षे स्वकीयां सेनां सन्नियुज्य स्वयं चार्जुनस्य सहायकोऽभवत्। युद्धेऽनेकेषु प्रसङ्गेषु तत्तत्समायोजितबुद्धिदानेन पाण्डवान् अरक्षत्। सपत्नेषु कौरवेष्वन्तःक्षोभमुत्पादयितुं तेनैव कर्णसमीपे कुन्ती प्रेषिता। तया च कर्णजन्मवृत्तान्तः कर्णाय श्रावितः। यद्यपि कर्णः कौरवाणां पक्ष नाजहात्, तथापि इमे भ्रातर इति मनःशैथिल्यमुत्पन्नमेव। कृष्णस्येदमेव मानसमाकूतमासीत्। तथापि लोकोत्तरपराक्रमशीलो मानसीं दुर्बलतां विना हन्तुमशक्य इति कुन्तीप्रेषणेन सा समुत्पादिता। कर्णेन कुन्तीसमीपे प्रतिज्ञातं यदर्जुनं विहाय चतुरो न मारयिष्यामीति। घटोत्कचवधप्रसङ्गे वासवदत्तशक्तेर्घटोत्कचे प्रयोगेणार्जुनवधार्थमेव रक्षितायास्तस्या अपगमेऽर्जुनस्य विजयो निःशङ्कोऽभवत्। एवमित्यादीनि कृष्णस्य बुद्धिचातुर्याणि समाश्रित्य पाण्डवा विजयं लेभिरे। कृष्णविरहितानां पाण्डवानां विजयोऽभविष्यन्न वेति संशयितमेवेत्येवविधप्रसङ्गविचारणया निश्चेतुं शक्यते यत् सत्यपि धनुर्वेदज्ञाने, सत्यपि बले, सर्वत्र धर्मस्थाने च प्रत्युत्पन्नमत्यभावे सर्वं निष्फलं स्यादेव। पाण्डवानामनन्यसदृशं कृष्णस्याश्रयणं तेषामपि चातुर्यं वा विशदीकरोतीव।

रामायणे नायकप्रतिनायकयोः पात्रसंघटनप्रसङ्गानामल्पत्वेन रामस्य कृतयुगोचितवृत्तिरूपा राजनीतिः; महाभारते तु पात्राणां बहुत्वेन तत्र तत्र बहुविधा राजनीतिर्दृश्यते। महाभारते यथा पाण्डवपक्षे भगवान् कृष्णोऽद्वितीयतया भासमानः प्रतीयते, तथा कौरवपक्षे कर्णोऽपि। स चोदारः, दाता, वीरः, महारथोऽस्त्रविद्यायामर्जुनसमकक्षतां वहति, तथापि भीष्मः प्रतिप्रसङ्गमेनमधिक्षिपति। तस्यायमभिप्रायः—यदि कर्णो दुर्योधनादीनां सहायको न भवेत्, तदा दुर्योधन इयान् उद्रिक्तो न भवेत्, अत एव दुर्योधनादीनामुत्तेजकः कर्ण एव। संभवत्यप्येतदग्रे तत् स्पष्टीभवति। अस्त्रविद्यापरीक्षावसरे दुर्योधनेन सह तस्य प्रथमः परिचयः, सद्य एव दुर्योधनेनाङ्गदेशराज्यं तस्मै दत्त्वा स स्वीकृतः। ततः स दुर्योधनस्य मित्रं बभूव। दुर्योधनविपक्षान् पाण्डवान् स स्वविपक्षानेव मेने। एतत् तस्य कृतज्ञत्वं प्रकटयति।

पुनश्च द्रौपदीस्वयंवरे—

सर्वान्नृपाँस्तान् प्रसमीक्ष्य कर्णो धनुर्धराणां प्रथमो जगाम।
उद्धृत्य तूर्णं धनुरुद्यतं तत् सज्यं चकाराशु युयोज बाणान्॥
दृष्ट्वा सूतं मेनिरे पाण्डुपुत्रा भित्त्वा नीतं लक्ष्यवरं धरायाम्।
धनुर्धरा　　रागकृतप्रतिज्ञमत्यग्निसोमार्कमथार्कपुत्रम्॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

दृष्ट्वा तु तं द्रौपदी वाक्यमुच्चैर्जगाद नाहं वरयामि सूतम् ।
तत्याज कर्णः स्फुरितं धनुस्तत्········ ···॥
(महा० आ० प०)

एवं द्रौपदीकृतः कर्णस्यापमानोऽपि कर्णस्य पाण्डववैराग्नाविन्धनमिवाभवत् । अनेन बीजेन वस्त्राहरणप्रसङ्गे कर्णेनापि दुर्योधनानुकूलानि वचनान्येवावोचिषत । यथा—

एको भर्ता स्त्रिया देवैर्विहितः कुरुनन्दन ।
इयं त्वनेकवशगा बन्धकीति विनिश्चिता ॥
अस्याः सभामानयनं न चित्रमिति मे मतिः ।
एकाम्बरधरत्वं वाऽप्यथ वापि विवस्त्रता ॥

एतेन द्रौपद्यामपि तस्य क्रोधः सुव्यक्तो भवति । स्पष्टमेतत् कर्णस्य बलमाश्रित्यैव दुर्योधनो प्रगल्भते स्म । पुनरपि द्रौपदीं प्रति कर्णस्य वचनानि । यथा—

त्रयः किलेमे ह्यधना भवन्ति दासः पुत्रश्चास्वतन्त्रा च नारी ।
दासस्य पत्नी त्वधनस्य भद्रे हीनेश्वरा दासधनञ्च सर्वम् ॥
प्रविश्य राज्ञः परिवारं भजस्व तत् ते कार्यं शिष्टमादिश्यतेऽत्र ।
ईशास्तु सर्वे तव राजपुत्रि भवन्ति वै धार्तराष्ट्रा न पार्थाः ॥
अन्यं वृणीष्व पतिमाशु भाविनि यस्माद् दास्यं न लभसि देवनेन ।
अवाच्या वै पतिषु कामवृत्तिर्नित्यं दास्ये विदितं तत् तवास्तु ॥

इत्यादीनि कर्णस्य द्रौपदीं प्रत्यपि यान्यधिक्षेपवचांसि, तत्रापि दुर्योधने कृतज्ञता, द्रौपद्याः स्वयंवरे कृतस्तस्यापमान एव च मूलमिति सुतर्कम् । अस्यैव कर्णस्य कृतज्ञमित्रस्य बलमाश्रित्य दुर्योधनः समुन्नद्ध आसीत् । कर्णोऽप्येतद् ज्ञातवानासीत्, तद् दुर्योधनसभां त्यक्त्वा हस्तिनपुरान्निर्गमनसमये स्वरथे उपवेश्य भगवता कृष्णेन सहैव नीतः मध्येमार्गं कर्ण उक्तवान् । यथा—

माञ्च कृष्ण समासाद्य कृतः शस्त्रसमुद्यमः ।
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः ॥
तस्माद्रणे द्वैरथे वा मां प्रत्युद्यातारमच्युत ।
वृतवान् परमं कृष्ण प्रतीपं सव्यसाचिनः ॥
(महा० उद्योग० अ० १४१)

आभ्यां श्लोकाभ्यां दुर्योधनस्य कर्णोपसंग्रहे कारणं विशदीभवति ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एकतो दुर्नीतिमाश्रितस्य दुर्योधनस्यावलम्बनबलं कर्ण आसीत्, तथेतरतः पाण्डवानामवलम्बनं कृष्ण आसीत्। पितृष्वसुः पुत्रः कर्णो भगवता कृष्णेन कथं घातित इत्यपवादो मा भूदिति नीतिपटुना कृष्णेन हस्तिनापुरान्निर्गमनसमये कर्णः स्वरथे उपवेश्य सहैव नीतः। मध्येमार्गं तं कुन्तीपुत्रोऽसीत्यावेद्य कौरवाणां पक्षं त्यक्त्वा पाण्डवपक्षे समागमिष्यसि चेत् पाण्डवास्त्वां ज्येष्ठं भ्रातरं स्वीकृत्य समग्रं राज्यं तुभ्यं दास्यन्तीति प्रलोभितः। तथापि कर्णः स्वसिद्धान्ताद् विचलितो नाभूत्। ततः कृष्णेन पाण्डवानां पराक्रमं वर्णयित्वा भयमपि प्रदर्शितम्, तथापि कर्णो न चचाल। कृष्णरथं त्यक्त्वा युद्धान्ते यदि वयं जीविष्यामस्तदा पुनर्द्रक्ष्यामस्त्वाम्, अथवा स्वर्गे द्रक्ष्याम इति वदता तेनातिहृद्यं यज्ञरूपकं वर्णितं स्वरथमारुह्य निर्गतः।

अवलोक्यते च महाभारते यदा कृष्णोऽसिद्धार्थानुनयो निवृत्तः, तदा विदुरकुन्त्योर्युद्धनिमित्तां परस्परं चिन्तां वर्णयित्वा कुन्त्याः कर्णसमीपे गमनं वर्णितम्। तदप्यपवादपरिहारायैवाभूत्। स चेतिहास इत्थम्—

असफलां मन्त्रणां विधाय कृष्णे हस्तिनापुरान्निर्गते कुन्ती विदुरेण सह युद्धे कौरवाणां महान्तं संक्षयं निर्धार्य भीष्मो द्रोणश्च पाण्डवेषु कदाचित् कृपावन्तौ स्याताम्। किन्तु—

अयमेको वृथा दृष्टिर्धार्तराष्ट्रस्य दुर्मतेः।
मोहानुवर्ती सततं पापो द्वेष्टि च पाण्डवान्॥
महत्यनर्थे निर्बन्धी बलवाँश्च विशेषतः।
कर्णः सदा पाण्डवानां तन्मे दहति सम्प्रति॥
आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान् प्रति।
प्रसादयितुमासाद्य दर्शयन्ती यथातथम्॥

एवं कृष्णवत् कुन्त्यपि प्रयत्नं कृतवती कर्णमनुनेतुम्। तथापि विफलप्रयत्नाऽभवत्। अस्य कर्णस्यैव पराक्रमं बलं कृतज्ञत्वं निश्चलत्वमध्यवसीय दुर्योधनो गर्जन्नासीदिति सुस्पष्टमेव। अर्थाद् दुर्योधनोद्योगः कर्णबलमेवावलम्बते। एवं पाण्डवानां सर्वाऽपि विजयाशंसा कृष्णमवलम्बते। अयमेवात्र विभेदो यदेकत्र दुर्नीतिः, अन्यत्र नीतिः। एकत्र राजा दुर्योधनः, अन्यत्र राजा धर्मः (युधिष्ठिरः)। अत एव राज्ञा युधिष्ठिरेण प्राप्तराज्येन कृष्णसमीपं गत्वैवमभाषि—

तव कृष्ण प्रसादेन नयेन च बलेन च।
बुद्धया च यदुशार्दूल तथा विक्रमणेन च॥



CC-0. Sampurnanand University Collection. Digitized by eGangotri

पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया।
नमस्ते पुण्डरीकाक्ष पुनः पुनररिन्दम ।। इति।

अत एव चावसरे पाण्डवैर्वक्तव्य उत्तरे स्वयं भगवान् कृष्ण एवोत्तरं ददाति स्म ।

कर्णार्जुनयोर्युद्धे भूम्या कर्णस्य रथचक्रे ग्रस्ते कर्णो वदति—

भो भोः पार्थ महेष्वास मुहूर्तं परिपालय ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महीतलात् ।।
सव्यं चक्रं महीग्रस्तं दृष्ट्वा दैवादिदं मम ।
पार्थ कापुरुषाचीर्णमभिसन्धिं विसर्जय ।।

इत्याद्युक्त्वाऽर्जुनं स्तौति—

त्वञ्च शूरतमो लोके साधुवृत्तश्च पाण्डव ।
अभिज्ञो युद्धधर्माणां वेदान्तावभृथप्लुतः ।।
दिव्यास्त्रविदमेयात्मा कार्तवीर्यसमो युधि ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज ।।
न मां रथस्थो भूमिष्ठं विकलं हन्तुमर्हसि ।
न वासुदेवात् त्वत्तो वा पाण्डवेय बिभेम्यहम् ।।
त्वं हि क्षत्रियदायादो महाकुलविवर्द्धनः ।
अतस्त्वां प्रब्रवीम्येष मुहूर्तं क्षम पाण्डव ।।

एतेषां कर्णवचसामुत्तरं भगवान् कृष्ण एव कथयति, यथा—

तमब्रवीद् वासुदेवो रथस्थो राधेय दिष्ट्या स्मरसीह धर्मम् ।
प्रायेण नीचा व्यसनेषु मग्ना निन्दन्ति दैवं कुकृतं न तु स्वम् ।।
यद् द्रौपदीमेकवस्त्रां सभायामानाययेस्त्वञ्च सुयोधनश्च ।
दुःशासनः शकुनिः सौबलश्च न ते कर्ण प्रत्यभात् तत्र धर्मः ? ।।

यदा सभायां राजानमनक्षज्ञं युधिष्ठिरम् ।
अजैषीच्छकुनिर्ज्ञानात् क्व ते धर्मस्तदा गतः ।।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इत्यादि ।

यश्च श्रीकृष्णः कर्णं पाण्डवपक्षमानेतुं पूर्वं बहुविधानि प्रलोभनान्युपस्थापयामास स एव कृष्णस्तं बहुविधैरुपालम्भैर्लज्जीकरोति । तेन महाभारत इयं कृष्णस्य नीतिः स्फुटीभवति 'येन केनाप्युपायेन साम्ना दाम्ना भेदेन दण्डेन वा शत्रुर्हन्तव्यः' इति । कर्णस्य गुणास्तं रक्षणार्हं समर्थयन्ति, तथैव दुर्नीतिमनुसरतो दुर्योधनस्य पक्षवर्तित्वं हननार्हमपि वर्णयन्ति । पूर्वं भगवता कृष्णेन तस्य गुणान् विलोक्य तद्रक्षणाय प्रयेते । तत्रासफलेन कृष्णेनैवोक्तम्—

"छिन्ध्यस्य मूर्द्धानमरेः शरेण न यावदारोहति वै रथं वृषः ।"

दुर्नीतिमाश्रितस्य दुर्योधनस्य पक्षपातित्वमेव वधार्हत्वं कृष्णो मेने । एष नीतेर्महान् विजयः । युद्धे पाण्डवानां कृष्णबुद्ध्याश्रितत्वं महाभारते प्रतीयते । तच्च तत्र तत्र श्लोकैः स्पष्टीभवति । एतत् पूर्वमपि निवेदितम् ।

अथ राज्यप्राप्त्यनन्तरं कार्याणि षोढा व्यभजत युधिष्ठिरः—

१. यौवराज्यम्—अत्रानुजानां प्रथमो भीमसेनो न्ययुज्यत ।

२. सन्धिः, विग्रहः, यानम्, आसनम्, द्वैधीभावः, समाश्रयः—इति षाड्गुण्ये, कर्तव्यनिर्णये, कस्यापि कार्यस्य चिन्तने, मन्त्रणे च बुद्धिसम्पन्नं विदुरं न्ययुङ्क्त ।

३. कृताकृतपरिज्ञाने, आयव्ययचिन्तने सञ्जयं न्ययुङ्क्त ।

४. बलस्य परिमाणे, तस्य च भोजनवेतनदाने, तद्विचारे तेन नकुलो नियुक्तः ।

५. दुष्टानां शिक्षायां परचक्राद्भयप्राप्तौ प्रजानां त्राणेऽर्जुनो नियुक्तः ।

६. राज्ञोऽङ्गरक्षणे सर्वावस्थायां समीपस्थितौ च सहदेवो नियुक्तः ।

ततः परं देवकार्ये ब्राह्मणानां सत्कारे धर्मकार्यावलोकने धौम्योऽप्यधिकारभागासीत् ।

पूर्वमुक्तं धृतराष्ट्रेण द्वौ विभागौ कृतावास्ताम् । यथा—

कोशसंवहने दाने भृत्यानां चान्ववेक्षणे ।
भरणे चैव सर्वस्य विदुरः सत्यसङ्गरः ॥
सन्धिविग्रहसंयुक्तो राज्ञां संवाहनक्रियाः ।
अवैक्षत महातेजा भीष्मः परपुरञ्जयः ॥

CC-0. Sampurnanand University Collection. Digitized by eGangotri

युधिष्ठिरेण धौम्येन सहितानामेषां सप्तत्वेन मनुस्मृतिरप्याहृतेति व्यज्यते, यथा—"मन्त्रिणः सप्त वाष्टौ वा प्रकुर्वीत" इति। दण्डनीतेरपरिहार्यत्वं यथा कणिकेनोक्तं पूर्वं वर्णितम् , तथाऽर्जुनेनापि युधिष्ठिरं प्रति दण्डनीतेरावश्यकत्वमुक्तं शान्तिपर्वणि।

एवं रामायणमहाभारतयोरुभयोरपि दण्डनीतेः शस्त्रास्त्राणां माहात्म्यं समानमेव। उभयत्रापि परचक्राद्भयाशङ्का, रक्षणव्यवस्थादिकं समानम्। उभयत्रापि व्यवहारावलोकने स्मृत्यादिधर्मशास्त्राणामाश्रयः। तेन ब्राह्मणसहायो राजैव स्वयं व्यवहारावलोकनेऽपराधिनां शिक्षायां प्रभुः। धर्मशास्त्राणां माहात्म्यमुभयत्रापि। एवं साम्येऽपि महाभारतकाले कलियुगोचितविचाराणामाचाराणाञ्चाधिकः प्रवेशः, न तावान् रामायणकाले इति।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# शान्ता दशरथात्मजा ?

डॉ० अशोकशास्त्री, पुराणविभागाध्यक्षः,
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

श्रीवाल्मीकीये रामायणे यदस्याख्यानभागः प्राधान्येन पदमादधाति, नास्ति तत्र कोऽपि सन्देहलेशोऽपि। तत्त्वतस्तु यथेदं रामायणं यथैकाश्रयत्वेनेतिहासपुराणयोर्महाकाव्यस्य च संज्ञामधिकर्तुमर्हति, तथार्वाचीनसमयसम्भूताख्यानोपाख्यानयोरुत्समित्यपि वक्तुं शक्यते, परभाविक्षोदिष्ठोपाख्यानीयरसस्य जनमनसामाकर्षणे रामायणमहाभारतयोरवदानत्योपजीव्यत्वादित्येतदकामेनापि वाच्यम्। यदा तावद् वैदिककर्मकाण्डीयनीरसो दुर्बोधश्चांशो रसपिपासुजनमात्रस्यानायत्तोऽभूत्, तदा रामायणाख्यानभागस्य सरला रसधारा तेषां चित्तं विनोदयितुं नूनमलमासीत्। तेन वयं प्रेक्षामहे यदर्वाचीनानां बहूनां श्रव्यदृश्यकाव्यानामुपादानरूपेण व्यवह्रियन्ते विचित्राणि रामायणीयानि चेतिवृत्तानि।

कामं शाखाप्रशाखाभिः समृद्धोऽयं पराचीनः साहित्यमहीरुहः, तथापि नः प्राचीनशास्त्राणां परिप्रेक्षितायां यथा विविधा आशङ्काः समुद्भवन्ति, तथा आख्यानोपाख्यानानां विचारेऽपि समस्यावैविध्यमस्माकं पुरः समुदेति। अविशेषज्ञाः पाठका आसामाशङ्कानामन्तःप्रवेष्टुमक्षमाः सन्तस्तासां मर्मोद्घाटयितुमशक्नुवन्तो ह्यत्र वीतस्पृहा भवन्ति, यथोक्ताः पाश्चात्यभावानुप्राणिता विद्वांसश्चाशङ्कास्पदान्युपाख्यानानि पूर्वापरविरोधीनीति कृत्वा तानि समाधातुकामाः स्वामशक्तिं न केवलं प्रख्यापयन्ति, परन्तु तान्युपाख्यानान्यैतिह्यरहितानि कविकल्पितानीति घोषयितुं न विकल्पन्ते।

यथा तथास्तु, धीरप्रकृत्या स्थिरचित्तेन च विचार्यामून्युपाख्यानानि समस्याबहिर्भूतानि भवितुमर्हन्ति, तत्त्वञ्चैषामाविष्कृत्य लोकदृष्टेः पुरो विषयीकर्तुमपि शक्नुमः। एवं च तेषामुपाख्यानानां समूलकत्वमपि जनसमाजे प्रकटितं स्यादिति। अस्मिंश्च निबन्धेऽनालोचितपूर्वं विषयमवलम्ब्य वयं विमृशामः। आदौ तावदाशङ्कायाः स्वरूपं संक्षेपेण विवृणुमः। उपरिष्टाशङ्कोद्भूतेः कारणं निर्णेतुं प्रयतिष्यामहे।

इदं तु विचारात् प्राक् किञ्चिदवधेयमद्यत्वे वयमापातदृष्ट्या यद् गीर्वाणवाणीनिबद्धं रामायणमुपलभामहे तत् पाठभेदेन दाक्षिणात्योदीच्यभारते च स्थूलतो द्विधा प्रतीयते।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तदेतत् शाखाभेदेन विभक्तं द्विधैव विभक्तुं शक्यते। आद्यं तावदुत्तरपश्चिमप्रान्तीयम्, अन्त्यं पुनरुत्तरपूर्वभारते प्रचलितमिति। फलतो वङ्गदेशे प्रचलितं रामायणमपि द्विधा परिगणितम्। तत्रैकम् आग गाल ए श्लेगेल ( Aug. Gaul A Schlegel ) इत्यनेन सम्पादितम्। द्वितीयं लोकनाथटीकासंवलितं वङ्गभाषानुवादेन सह अमरेश्वरठक्कुरसम्पादितम्, प्रकाशितं च कलिकाता-महानगर्यामिति, यद्वा गेस्पेर गोरेशियो ( Gaspare Gorresio ) इत्यनेन सम्पादितं पैरिस-नगर्यां प्राकाशि। यत्तूत्तरपश्चिमप्रान्तीयं लाहौर-प्रदेशाद् भगवद्दत्तेन प्रकाशितम्, तत् पुनरन्यत्। दाक्षिणात्ये प्रचलितं रामायणं हि कुम्भ-कोणाख्यप्रदेशात् प्राकश्यमनायि कृष्णचार्येण।

एवमन्यानि बहून्यपि रामायणानि प्रदेशभेदेन प्रचलन्ति। संक्षेपतः तेषामग्रगण्यानि खलु प्राग् वर्णितानि रामायणान्येवोपजीव्यानि चास्माकं समस्यासमाधानपक्षे। वरदा-नगर्याः प्रकाशितानि रामायणस्य संस्करणान्यपि ध्येयानि।

यद् भवतु, रामायणाध्येतारः कामं सर्व एव शान्ताभिधेयाया रमण्या इतिहास-मभिजानन्ति; तत्र विप्रतिपत्तिस्तु तत्पितुः परिचये शास्त्रीयप्रमाणानाम्। केऽयं शान्ता नाम ? कस्तस्या अविप्रतिपन्नः परिचयः ? कस्येयं दुहिता, किंवंशीया वेत्येता आशङ्काः पाठकानां मनांस्यालोडयन्ति।

वस्तुतस्तु नेमे सन्देहविषयाः, यतो हि केषुचिद् ग्रन्थेषूपलभ्यत इयमयोध्याधिपते-र्दशरथस्य कन्या श्रीरामचन्द्रस्य स्वसेति। अन्येषु तु पर्यालोच्यमानेष्वेवं सिद्धान्तो द्रष्टव्यो यत् तस्याः पिता लोमपादोऽङ्गानां पतिर्दशरथस्य परमं मित्रमिति। तत्र तावद् विचारणीयं एतयोर्मतभेदयोः कतरत् सप्रमाणं ग्रहणीयमस्माभिः।

भारतवर्षस्य दक्षिणप्रान्ते प्रचलतो रामायणस्य मतेनेदमवगम्यते यदयोध्याधि-पतिरनपत्य एवासीत्। पुत्रकन्याहीनत्वमनपत्यत्वं नाम। अङ्गाधिपतिर्लोमपादस्तस्यैकान्ततो मित्रम्। इयं च शान्ता लोमपादस्य तनया। असौ राजा अमिततेजसे मुनये ऋष्यशृङ्गाय तां पाणिग्रहणार्थं प्रददौ[१]। निरपत्यो दशरथस्तु पुत्रेष्टिकामनया यज्ञं प्रस्तुत्य तत्राध्वर्युरूपेण मुनिममुं नियोक्तुं लोमपादमनुमोदनाय प्रार्थितवान्। सोऽपि सानन्दमन्वमोदत प्रैरयच्च जामातरं दुहितरं चाऽयोध्यायै[२]।

---

१. अन्तःपुरं प्रवेश्यास्मै कन्यां दत्त्वा यथाविधि।
शान्तां शान्तेन मनसा राजा हर्षमवाप सः॥
( रामायणे १।९।३० )

२. बालकाण्डे एकादशसर्गोऽनुसन्धेयः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अथ मुनिना ऋष्यश्रृङ्गेण प्रवर्तितायां पुत्रेष्टौ यागफलरूपेण दशरथस्य चत्वारः पुत्रा रामादयोऽजनिषत। परन्तु भारतवर्षस्योत्तरपश्चिमप्रान्ते उत्तरपूर्वस्मिन् प्रदेशे च प्रचलतो रामायणस्य मतं किञ्चिदन्यथारूपं दृश्यते। तन्मते राज्ञो दशरथस्य शान्ताभिधेया काचित् कन्या आसीत्। तां च कन्यां राजा दशरथोऽतिप्रियाय मित्राय लोमपादायाऽपत्यकृतिकां कृत्वा ददौ। अथ स पुत्रहीनत्वात् पुत्रेष्टिमारेभे, तत्र ऋत्विक्त्वेन च मुनिं तत्पत्न्या शान्तया सह वरीतुं स्वामयोध्यानगरीमानिन्ये।

इदमत्र मीमांसितव्यम्—दक्षिणभारतीयरामायणे कुत्रापि शान्ता दशरथेनापत्यकृतिका राज्ञे लोमपादाय दत्तेति वार्ता न श्रूयते। अध्यकारि तत्र शान्ता, लोमपादस्य औरसी कन्येति वृत्तान्तेन।

उत्तरभारतीयरामायणस्य दशमे सर्गे वैशद्येनावर्णि यच्छान्ता लोमपादस्याऽपत्यकृतिका कन्येति। तस्या जनकः पिता खल्वयोध्याधिपतिर्दशरथ इति।

अनेन च भारतप्रान्तद्वयीयमतभेदेन पाठकानां मनःसु संशयस्थानं लभत एव। अधिरामायणमेवं विरुद्धो मतभेदोऽनेकान् सत्यानुसन्धायिनः पर्याकुलयेदित्यत्र नास्ति संशयलेशोऽपि। एवमाक्षेपसमाधानायापेक्ष्यते तावन्निरपेक्षा धीरा दृढा तीक्ष्णा विचार-बुद्धिरिति। अतोऽस्माभिर्गवेषणापथिकैरनयोर्मर्मोद्घाटनाय प्रवर्तितव्यम्।

इदमत्र चिन्तनीयम्—दक्षिणप्रान्तीयमतं भाविनि युगे कतिपयैरेव ग्रन्थकृद्भिरनु-सृतम्। अध्यात्मरामायणस्य[१] चम्पूरामायणस्य च[२] समीक्षयेदमेव प्रतीयते यद् दक्षिणप्रान्तीय-मतमेव ताभ्यामन्वसारि समर्थितं च। क्षेमेन्द्रविरचिते रामायणमञ्जरीकाव्येऽपि[३] शान्ता रोमपादस्यौरसी कन्येति प्राकाशि। अन्यतश्चोत्तरभारतीयमतमेवाधिकाधिकेषु ग्रन्थेषु दृश्यते। विष्णुपुराणे चोक्तम्—अजपुत्रो दशरथोऽनपत्याय लोमपादायाऽपत्यकृतिकारूपेण स्वां शान्तां नाम कन्यां ददौ। तथा हि—"यस्मै लोमपादाय अजपुत्रो दशरथः शान्तां नाम कन्या-मनपत्याय दुहितृत्वे युयोजेति[४]।"

यद्यपि स्कन्दपुराणे दशरथकन्यात्वेन शान्ताया नास्ति नामगन्धोऽपि, तथापि दशरथस्य चतुष्पुत्रीजननान्तरमेका परमरूपवती कन्याऽजनीति वार्ता तत्स्थान उपलभ्यते। इदमपि

१. वङ्गवासीसंस्करणम् १।३।४।
२. भुवनचन्द्रवसाकेन सम्पादितं बालकाण्डम्, पृ० ३।
३. काव्यमाला ८।३, बालकाण्डम् ४७–६२।
४. विष्णुपुराणं वङ्गवासीसंस्करणम्, ४।१८।३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तत्रावर्णि यत्—"अङ्गराजाय स तां कन्यां दत्तकत्वेन ददाविति[१] ।" अमुद्रितेऽपि वङ्गप्रदेशीय-पद्मपुराणस्य पातालखण्डीयग्रन्थनिचये आलोचिते इदमेव तत्त्वं समर्थितमित्युपलभ्यते ।

अनुसन्धेयैषा कथा वङ्गीयसाहित्यपरिषद्पुस्तिकायाम्[२], एशियाटिक-सोसायटी-पुस्तिकायां च[३] । महाकवि-भवभूतिविरचितस्योत्तररामचरितस्य प्रस्तावनायां नट-मुखाल्लभ्यते—

कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् ।
अपत्यकृतिकां राज्ञे लोमपादाय यां ददौ ।।
विभाण्डकसुत ऋष्यश्रृङ्गस्तामुपयेमे ।। इति ।

अर्वाचीनां लेखकानामनेक एव प्रायशः शान्ताजन्मनि मतमिदमग्रहीषुः । कृत्तिवासीय-रामायणे वयमुपलभामहे—दशरथस्य सार्धसप्तशती भार्याणामासीत् । तास्वेका भार्गववंशीयाऽभवत् । तया हेमलता नाम्नी कन्या प्रसूता । इयमेव शान्ताख्यया परिचिता । अङ्गराजो लोमपादस्तामेव कन्यामपत्यकृतिकात्वेनाऽग्रहीत् । अद्भुताचार्यीयरामायणेऽपीदमेवोपाख्यान-मुदलेखि ।

तत्त्वतस्तूत्तरभारतीयशान्ताया अधिजन्म इदमेव मतं तथा प्रसिद्धिं लेभे, यद् दत्तक-मीमांसाग्रन्थे[४] श्रीमान् नन्दपण्डितो निजवक्तव्यस्य समर्थनायेदमेव मतमुल्लिखितवान् । ईश्वरचन्द्रो विद्यासागरः, जीवानन्दविद्यासागरस्तथा एस० के० वेल्वेलकारप्रभूतय आधुनिकतराः पण्डिता अपि मतमिदं समर्थयामासुः । अयोध्याधिपतेर्दशरथस्य तनूजेयं शान्ता, अयमुत्तरभारतीयप्रवादो यद्यपि भवभूतिप्रमुखैः प्रथितनामभिर्लेखकैरनुसृतोऽन्यैश्च बहुभिः कविभिर्नाट्यकारैः समर्थित इति कृत्वा आपातदृष्ट्याऽस्य सत्यता प्रतीयते, तथापि रामायणस्य शाखाभेदान् तीक्ष्णदृष्ट्या समीक्षमाणान् समालोचकान् प्रति विचारचक्षुषा प्रतीयमानोऽयमुत्तरभारतीयो मतवादो न याथार्थ्यपदवीमवगाहते, सन्देहस्य तत्र गतिरस्त्येव । एवं रामायणीय-शाखाभेदेष्वेतदीयान्युपाख्यानानि नैपुण्येनालोच्यमानानि कतिपयैः कारणविशेषैर्दक्षिणभारतीय-मतवादानेव सत्यतामारोपयन्तीति नास्त्यत्र संशयलेशावकाशः ।

---

१. स्कन्दपुराणं नागरखण्डं वङ्गवासीसंस्करणम् ९८।१८।२२ ।

२. पुस्तिकासंख्या ५५, पृ० १९ ख, द्वादशाध्यायः ।

३. पुस्तिकासंख्या, जी० १४१६, पृ० २३ ख; जी० ४५३८, पृ० २५ ख ।

४. कलिकाता १८०४, पृ० ४२ ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

उत्तरभारतीय रामायणे हि शान्ता दशरथस्य प्रेष्ठा दुहितेति निरणायि[१]। केषुचिद्वंशेषु शान्ता दशरथस्य प्राणेभ्योऽपि गरीयसीति न्यगादि[२]। परमत्र कश्चिद् विषयो विमृश्यमानो विस्मयमेवावहति यत् का तावत् शान्तायाः प्रसूतिरिति कुत्रापि शाखासु तन्नाम न निरदेशि। दशरथस्य बह्वीषु भार्यासु कस्या गर्भे शान्ताऽजनीत्यत्र रामायणकारो मूकायते। स्यादेतत्, शान्ता दशरथस्य प्रथमा कन्या, परं तत्प्रसूतेर्नाम सगौरवं रामायणकारेण कथं न समुदकारि ? नूनमनपत्यस्य राज्ञो दयितायाः प्रथमापत्यप्रसूतित्वात् सगौरवं श्रद्धातिशयेन च नामोल्लेखेन भाव्यम्, तथा प्रथमापत्यजननादानन्दोत्सवेन पूर्णयाऽयोध्ययाऽप्यवश्यं भूयेत। दूरमास्तामानन्दोत्सवकथा, रामायणस्य कुत्राप्यंशे तदुल्लेखोऽपि न दृश्यते। यदि सत्यमेव शान्ता अयोध्याधिपतेः कन्या अभविष्यत्, तर्हि तत्प्रसूतेर्नाम्नोऽनुल्लेखे कारणमपि नाभविष्यत्।

अत एव दक्षिणभारतीयरामायणे दशरथोऽनपत्यत्वेनाख्यायि, नापुत्रकत्वेन। पुत्रेष्टि निर्वाहाय ऋष्यश्रृङ्गमयोध्यां नेतुकामो दशरथो लोमपादस्यान्तःपुरं प्रविश्य ऋष्यश्रृङ्गं शान्तां चाऽद्राक्षीदित्यत्र नास्ति विसंवादः कस्मिन्नपि रामायणे। अत्र त्वेतदेव न्याय्यं यच्चिरान्निजां कन्यां दृष्ट्वा सानन्दं तया सह कानिचित् प्रासङ्गिकानि सम्भाषणानि कुर्यादिति। परं तत्रापि नास्ति रामायणे कापि वार्ता।

किं बहुना, दशरथः शान्ता च जन्यजनकसम्बन्धेन बद्धौ, तत्रापि ग्रन्थकर्तुर्मौनं दृश्यते। अन्योन्यं तौ पूर्वत एव परिचितौ, अस्मिन्नपि विषये नास्ति किमपि प्रमाणम्। सुचिराद् दर्शनात् परं पितुः कन्यायाश्च तथाऽविदितसम्बन्धयोरिव व्यवहारो नियतमेव स्वभावविरुद्ध इव प्रतिभाति।

यज्ञे आर्त्विज्यकर्मणि ऋष्यश्रृङ्गो व्रतीभवितुमङ्गीकारित इत्यमुं कृतार्थतासूचकं वृत्तान्तं ज्ञापयितुं दूतमयोध्यायां दशरथः प्रेरितवान्। तत्रापि बहुकालात् परं स्वया कन्यया सह सम्भूय राजधानीं प्रत्याववृते, तदधिकृत्यापि कापि वार्ता न लभ्यते। अतश्च शान्ताऽतिथिरूपेणागता, नात्मजेति, नास्त्यत्र सिद्धान्ते सन्देहलेशः। यदा च दशरथः शान्तया ऋष्यश्रृङ्गेण च सह स्वां राजधानीं प्रत्याववृते, तदापि शान्ताया नासीत् प्रवृत्तिलेशोऽपि। यदि शान्ता याथार्थ्येन दशरथात्मजा, प्रथममपत्यं चाभविष्यत्, तर्हि दत्तकत्वेन स्थितापि सा चिरात् पितृगृहे

१. अमरेश्वर-ठाकुरस्य तथा गोर्रेशियो-इत्यस्य संस्करणम् १।१०।२५, श्लैगेल-इत्यस्य संस्करणम् १।१०।२४।

२. शान्ता प्रियतरात्मनः—भगवद्दत्तस्य संस्कारणम् १।९।२४।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

प्रत्यावर्तनकालेऽयोध्यावासिभिरानन्दोल्लासेनाद्रक्ष्यत । आनन्दकथा तु तावद् दूरतरा, शान्ता परमसमादरेणाभिनन्दितेति वाग्लेशोऽपि नोद्धृतः ।

दशरथस्य शुद्धान्तःप्रवेशात् परं शान्ता तत्र सर्वासामन्तःपुरिकाणां श्रद्धाभाजनमभवदित्येतदेव तत्र दृश्यते । अमितप्रभावस्य ऋषेः सहधर्मिणीति कृत्वा सर्वाः स्त्रियस्तां सगौरवं सश्रद्धं च सभाजयन्ति स्म, न तु सुचिरादेकस्या एव कन्यायाः पितृगृहे आगमनेनाऽनाविला आनन्दधारा सर्वथा प्रवहेत् । सा कुत्रापि रामायणभेदे लेशतोऽपि नादर्शि । अन्तःपुरमहिलासु तन्मातुः कोऽप्युल्लेखो नास्ति । किमधिकम्, दशरथस्य तया सह यः सम्बन्धो दृश्यते स श्रद्धाया एव कारणमासीत्, न च स्नेहस्येति ।

यदि सत्यमेव शान्ता अयोध्याधिपतेर्दशरथस्यात्मजा अभविष्यत्, सा चेत् प्राणेभ्योऽपि प्रियतरा अङ्गराजायापत्यकृत्यै अदास्यत, तर्हि तद्दानकाले नियतमेव शास्त्रीयमुत्सवानुष्ठानं प्रावर्तिष्यत । किञ्च धर्मशास्त्रानुसारेण दत्तकदाने तद्ग्रहणे वा विहितयज्ञानुष्ठानमन्यच्च वैदिकं कर्म प्रारप्स्येत, परं तदपि केष्वपि रामायणेषु लवतोऽपि नोदलेखि । अन्यच्च, दशरथेनापि एकस्याः सन्ततेर्दानं सर्वथा अनुपपन्नमिव प्रतिभाति । यतो हि तदानीं दशरथस्य भाविपुत्रोत्पत्तिरज्ञैयैव । अस्यां दशायां स्ववंशनामकारिण्या एकस्यास्तनयाया दत्तकत्वेन दानं फलतो वंशलोपायैव प्रकल्प्येत । नहि कश्चित् कृतवेदी आत्मनो वंशलोपं कामयते । एकस्याः कन्याया दत्तकत्वेन दानमपि विचार्यमाणं न धर्मशास्त्रसम्मतमिति मन्ये । धर्मस्य शास्त्रस्य च पालको राजा ईदृशमशास्त्रीयं कर्म आचरेच्चेत् किं श्रद्धेयो भवेत् ?

यच्च "शान्ताऽयोध्याधिपतेर्दशरथस्य तनूजा" इति मतं पुष्णाति प्रचारयति च तथाविधमुत्तरभारतीयरामायणमपि परस्परविरुद्धोक्त्या पूर्णमिति दृश्यते । तथा ह्यत्रैव द्वयोरंशयोः शान्ता लोमपादस्याऽङ्गराजस्य वा कन्येति निरदेशि। तत्राप्येकत्र सुव्यक्तम् 'शान्ता लोमपादस्यात्मजा' इति प्रावाचि । यथा—

ततः स राजा विधिवच्छान्तां तस्मै प्रदास्यति ।
स्वकां दुहितरं भार्यां रूपौदार्यसमन्विताम्[१] ॥

रामायणीयनिगूढप्रमाणवाक्यादपि प्रतीयते यत् शान्तायाः पितृपरिचयमाश्रित्य दक्षिणभारतीयं मतमेव समीचीनम् । उत्तरभारतीयरामायणं तदधिकतरैर्लेखकैः परिगृहीतमप्यैतिहासिकदृष्ट्या, तत्त्वान्वेषकगवेषणया चेदमगृहीतत्वात् समूलत्वेनार्घं न लभते । दक्षिणभारतीयं मतं हि रामायणवाक्यैः कतिपयैः प्रमाणैर्बलवत् समर्थ्यते ।

१. अमरेश्वरठाकुर-गोरेशियो-सम्पादिते १।८।२५, भगवद्दत्त-श्लेगेलसम्पादिते १।८।२५। [ कश्चिदत्र स्वल्पः पाठभेदः ] ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

राजवंशकीर्तनप्रसङ्गेन वायुपुराणे[1], मत्स्यपुराणे[2], ब्रह्मपुराणे,[3] हरिवंशे[4] चाधोनिर्दिष्टः श्लोको दृश्यते—

"लोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत्" इति। अतो निःसंशयं सप्रमाणीक्रियते यच्छान्ता लोमपादस्यैवात्मजा, नापरस्य कस्यचिदिति।

महाभारतीयवनपर्वणि ( २७३—२९० अध्यायेषु ) रामायणीया आख्यायिका वर्णिता। तत्रापि रामस्य भ्रातृणां वार्ता श्रूयते, न स्वसुरिति। किञ्च तत्रैव दानस्तुतिप्रसङ्गे (१२०।२६), शान्तिपर्वणि (२३३—२३४), अनुशासनपर्वणि च (१३७।२५) शान्ताया लोमपाददुहितृत्वे बहूनि प्रमाणानि सन्ति। उक्तानि प्रमाणानि चैकत्र संमिलितानि चेत् कस्यापि मनीषिणो बोधे विलम्बो नोदियात् यद्धि शान्तायाः पितृवंशपरिचयमुत्तरभारतीयमतं विकिरति, तस्य किमपि मूलं नास्ति। अतोऽस्मिन् विषये दक्षिणभारतीयमतमेव निःसन्देहं ग्राह्यमिति।

वयं तु विमृशामः—ईदृश्या विप्रतिपत्तेः किं कारणमिति ? कथं वोत्तरभारतीयग्रन्थे एवं वैमत्यमुद्भूतमिति ? यत्परिपाकाच्छान्ता दशरथस्य तनूजेति, तथा लोमपादाय सा अपत्यकृतिकत्वेन प्रदत्तेति। एतद्विचारोऽपि विज्ञानां हृदयग्राही भवेदिति।

अस्माभिस्तु वायुपुराण-ब्रह्मपुराण-हरिवंशप्रेक्षावद्भिस्तत्र तत्र वर्णितनृपतिवंशानामन्तर्लोमपादस्य तद्वंशीयाधस्तननृपाणां चायमेव परिचय उपलभ्यते—यदङ्गदेशाधिपतीनां राज्ञां वंशे चित्ररथनामा कश्चित् प्रबलपराक्रमो नृपतिरजायत। तस्य कस्यचित् पुत्रस्य नाम दशरथ इति। असावेव दशरथो लोमपादनाम्ना प्राख्यापितः। तस्यैव दशरथापरनामधेयस्य शान्ता नाम कन्या व्यजायत। मुनेर्ऋष्यश्रृङ्गस्य प्रसादाद् लोमपादस्य पुत्रो चतुरङ्गो दाशरथिरुदपादि[5]। मत्स्यपुराणेऽपि दशरथं शान्तां चतुरङ्गं चाधिकृत्यायमेक एव वृत्तान्त उपलभ्यते।

---

१. आनन्दाश्रमसंस्करणम् ९९।१०३।

२. आनन्दाश्रमसंस्करणम् ४८।९५।

३. आनन्दाश्रमसंस्करणम् १३।४०।

४. वंगवासीयसंस्करणम् १।३१।४६ ख०।

५. वायुपुराणम् ९९।१०३ ख—१०४; ब्रह्मपुराणम् १३।३८ ख, ४०—४१; हरिवंश १।३१।४४ ख, ४६—४७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

विशेषस्तु तत्र दशरथो चित्ररथस्य न पुत्रः, किन्तु पौत्र इति। चित्ररथपुत्रस्य दशरथपितुर्वा सत्यरथा इति संज्ञा[१]।

यद्यपि विष्णुपुराणेऽन्यथोपलभ्यते। यथा—शान्ता अयोध्याराजस्यैव कन्येति, तथाप्यङ्गराजचित्ररथस्य दशरथ इत्याख्या लोमपादनाम्ना च तस्य प्रसिद्धिरिति। एतेनोपाख्यानेन सह पूर्वोक्तपुराणानामधिमतमैक्यमस्तीति ध्येयम्[२]।

अतश्च सुव्यक्तमिदमभ्युपेयते यल्लोमपादस्य दशरथेति नामान्तरमेव, एवं विरुद्धमतवादस्योत्पत्तिमूलमिति। अङ्गराजो दशरथोऽयोध्यानाथदशरथश्च तुल्यकालस्थितिकौ परस्परं मैत्रीमापन्नौ च। परं प्रथमवर्णितदशरथस्य कन्या शान्ता। कालक्रमेण प्राचीनसंस्कारं विस्मरन्तो जना रामचन्द्रपितरं दशरथमेवाङ्गराजदशरथात्मतया अमन्यन्त। तथैवासीत् प्रसिद्धिर्दृढतरा। श्रीरामचन्द्रश्च विष्णोरवतार इति सनातनधर्मावलम्बिनां पूज्योऽभवत्। तदीयवंशश्च प्राधान्यं लेभे।

शान्ता तत्त्वतोऽङ्गराजदशरथस्य कन्या भवन्त्यपि कालक्रमेणायोध्यापतिमेव दशरथं मन्यमानैस्तदीयतनयेति निरधारि। इतस्तु लोमपादो दशरथः शान्तां ऋष्यशृङ्गाय विवाहाय प्रायच्छदिति वार्ता सर्वेषु रामायणेषु सुस्पष्टं लिखितैव। यदि शान्ता अयोध्याराजस्य दशरथस्य कन्या भवेत्, तर्हि तस्याः सम्प्रदानमङ्गराजः कथं कुर्यात्, इत्याशङ्कायाः समाधानं कर्तुं जनो दत्तकदानव्याजं पन्थानमेकमुद्भाव्य रामायणे योजयामास। रामायणीयाः कतिपये श्लोका अप्येतच्छङ्काया उद्भवे सहकारिकारणान्यभूवन्। तथा हि सुमन्त्रोऽयोध्याधिपं दशरथमाह—

ऋष्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति[३]।

अत्र जामातृपदेन 'ऋष्यशृङ्गः कस्य जामाता निरवाचि'इत्यत्र तस्य सुव्यक्तमनुल्लिखितत्वाल्लोका ऋष्यशृङ्गमयोध्याराजस्य जामातरमन्यन्त। तथा च फलतः शान्तायाः पितृकुलपरिचयोऽपूर्वभावेनोद्भूत इति सर्वेषु रामायणेष्वधस्तनो दरीदृश्यते—

इक्ष्वाकुवंशजो राजा भविष्यति महायशाः।
नाम्ना दशरथो नाम धीमान् सत्यपराक्रमः॥

---

१. मत्स्यपुराणम् ४८।९४–९६ क।

२. विष्णुपुराणम् ४।१८।३–४।

३. वङ्गवासी–संस्करणम् १।९।२० क।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सख्यं तस्याङ्गराजेन भविष्यति महात्मनः।
कन्या चास्य महाभागा शान्ता नाम भविष्यति[1] ॥

अत्रेदं लक्षणीयम्——प्रथमोक्तेन 'तस्य'पदेनायोध्याराजो दशरथो बोध्यते, द्वितीयेन 'अस्य'पदेन समीपस्थोऽङ्गराज एवोच्यते। तथा सति शान्ता अङ्गराजदशरथस्यैव कन्या भवेत्, नायोध्यापतेर्दशरथस्येति सिद्धान्त आयाति। परन्तूत्तरभारतीयरामायणस्य व्याख्यातारो भ्रमेण प्रमादेन वा 'अस्य'पदस्य 'इक्ष्वाकुवंशीयदशरथस्य' इत्यर्थं व्यदधुः। अत एव शङ्कायाः सन्देहस्य वा सृष्टिः। वङ्गदेशीयकतिपयरामायणेषु[2] 'अस्य' इति स्थाने 'तस्य' इति पदं न्यवेशि। परं बहुषु पुस्तकेषु 'अस्य' इति पदस्य सद्भावात् पुस्तकान्तरीयः 'तस्य' इति पाठः प्रामादिक इत्यत्र नास्ति सन्देहस्यावकाशः। यद् भवतु, "कन्या चास्य महाभागा शान्ता नाम भविष्यति" इति श्लोकांश एव विप्रतिपत्तेरुद्भावक इति मन्तव्यम। अनेनैव प्रमादेन शान्तायाः पितृकुलविषये भ्रान्तधारणायाः सृष्टिर्जातोत्तरभारतीयरामायणेषु। इयमेव भ्रान्तिप्रभाविता धारणा बहून् कवीन् नाट्यकारांश्चाभिभूतवती।

रामायणीयानामुपाख्यानानां बह्वीषु शङ्कासु मध्ये इयमेका शङ्का अत्रोत्थापिता। अत्र सुधीजनानां दृष्टिपाते सति निबन्धकर्तुः श्रमः सफलः स्यादिति मन्यामहे।



१. कुम्भकोणसंस्करणम् १।११।२–३; अमरेश्वरठाकुर–गोरेशियो-श्लेगलसंस्करणानि १।१०।२–३; भगवद्दत्तसंस्करणम् १।९।२–३ (उत्तरभारतीयरामायणेषु किञ्चित पाठान्तरं विद्यते प्रथमश्लोके)।

२. अमरेश्वरठाकुर-संस्करणम् १।३०।१० श्लोकस्य पदटीका द्रष्टव्या।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# कातन्त्रीयो धातुपाठः

डॉ० जानकीप्रसादद्विवेदः, रिसर्च फेलो०
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

उपलब्धे शार्ववर्मिककातन्त्रव्याकरणे दिवादेर्यन् , नुः स्वादेः, तनादेरुः, ना क्र्यादेः, कर्तरि रुचादिङानुबन्धेभ्य आत्मनेपदम् , इन्–ञ्–यजादेरुभयम् ( ३।२।६७, ६८, ७१, ७२, ७६, ७९ ) इत्यादिसूत्रेषु दिवादिगणानां निर्देशादाचार्येण शर्ववर्मणाऽवश्यं धातुपाठः प्रणीत इति वक्तुं शक्यते। धातुगणानां निर्धारणाभावे सूत्रेष्वादिपदस्य निर्देशो न युज्यते कर्तुम्। आचार्यान्तरस्य धातुपाठमादाय सूत्रप्रणयनमौचित्यं नावहति पूर्वतनेभ्यो व्याकरणान्तरेभ्यां व्याकरणस्यास्याल्पत्वात्, पाणिनीयधातुपाठापेक्षयाऽत्र क्रमवैषम्यस्य सन्दर्शनाच्च। काशकृत्स्न-धातुपाठेनापि न संवदति धातुपाठोऽयम्। भेदकानि कानिचिदुदाहरणानि प्रस्तूयन्ते—

| | काशकृत्स्ने | पाणिनीये ( मा० धा० वृ० ) | कातन्त्रे |
|---|---|---|---|
| १. | हेठ एठ विबाधायम् ( १।४४० ) | हेठ विबाधायाम् , एठ च ( १।१६९-७० ) | हेठ विबाधायाम् , एठ च ( १।३६०-६१ ) |
| २. | —— | —— | मृग अन्वेषणे ( ३।७२७ ) |
| ३. | ष्ट्रूप समुच्छ्राये ३।६८) | ष्टुप समुच्छ्राये ( १०।११९ ) | ष्टूप समुच्छ्राये (३।७७३ ) |
| ४. | तप ऐश्वर्ये च, वृतु वर्तने। ( ३।१००–१ ) | तप ऐश्वर्ये वा वृतु वरणे। ( ३।५१–५२ ) | तप ऐश्वर्ये वा वृतु वर्तने। ( ३।८०५–६ ) |
| ५. | तुद-नुद-दिश-भ्राज-क्षिप-कृष एते परस्पैपदिनः ( तु० १-६ ) | तुद-णुद-दिश-भ्रस्ज-क्षिप-कृष एते उभयपदिनः ( तु० १-६ ) | तुद-कृष एते उभयपदिनः ( तु० ८४९-५४ ) |
| ६. | षिचिर् क्षरणे ( ५।११ ) | षिच क्षरणे ( ५।१४२ ) | षिच क्षरणे ( तु० ८५९ ) |
| ७. | वृधु वर्धने ( ६।६६ ) | वर्ध छेदनपूरणयोः (चु० १०३) | वर्ध छेदनपूरणयोः ( चु० ११२३ ) |

CC-0. Sampurnanand University Collection. Digitized by eGangotri

| | | |
|---|---|---|
| ८. तन्चु संकोचने (६।१८) | तन्चू संकोचने (रु०२८) | तन्चू संकोचने (रु० ६८२) |
| ९. म्लेछ चुटि छेदने ( ६।६६ ) | चुटि छेदने ( चु० १०७ ) | म्लेच्छ च ( चाद् व्यक्तायां वाचि )-चुडि छेदने ( चु० ११२७-२८ ) |
| १०. ढुढि अन्वेषणे ( १।१६१ ) | | ढुढि अन्वेषणे ( चु० १३४७ )। |

उद्धृतान्याख्यातप्रकरणस्य सूत्राणि किमुताख्यातप्रकरणं शर्ववर्माचार्येणैव प्रणीतमिति टीकाकारवचनेनावगम्यते, यथा –' कृतमनपेक्ष्य शर्ववर्मणा विरचितमिदमिति न दुष्यति" ( ऋदन्तस्येरगुणे ३।५।२५८ ) इति। शार्ववर्मिको धातुपाठः साम्प्रतं नोपलभ्यते।

शर्ववर्माचार्येण स्वीयधातुपाठस्य किञ्चिद् व्याख्यानमपि कृतमित्यत्र तदुपोद्बलकानि वचनानि नोपलभ्यन्ते। यत्तु युधिष्ठिरमीमांसकैरेतदीयवृत्तिरचनानुबन्धे "विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः" इति कविकल्पद्रुमस्य धातुदीपिकायां टीकायामुपन्यस्तं दुर्गादासीयं वचनं प्रमाणरूपेणानुमतम् ( सं० व्या० शा० इति०, भागः २, पृ० ६७ ), तन्न विचाररमणीयम्। इदमवधेयम् – तत्र तत्र धातुगणे 'उभयतो भाषा' इति पाठस्य करणादेव तत्तद्धातूनामुभयपदित्वे सिद्धे "इन्-ञ्-यजादेरुभयम्" ( ३।२।७६ ) इति सूत्रस्य नैरर्थक्यमिति पूर्वपक्षमुपस्थाप्य तन्निराकुर्वन्नाह वृत्तिकारः – "गणकारवचनप्रमाणार्थमिदम्" इति। तत्र च पञ्जीकारः "येषामेव धातूनां गणकृतोभयतो भाषत्वमुक्तम्, तेषामेव सूत्रकृताप्युभयपदं विधीयते इति। एकसंवादनिबन्धन गणकारवचनस्य प्रामाण्यं यथा स्यादित्यर्थः" इति। यदि शर्ववर्मणः कश्चिद् वृत्तिग्रन्थः स्यात् तर्हि तदीयमत्र वचनमवश्यमुपस्थापयेत्। एवं धातुपाठस्थं वचनमुपस्थापयता तद्वृत्तिवचनस्य यत् स्मरणमपि ( निर्देशोऽपि ) न कृतं त्रिलोचनदासेन, तेनेदमेव वक्तुं शक्यते—न शर्ववर्मणा धातुपाठस्य किञ्चिद् व्याख्यानमारचितमिति।

'विशेषः पाणिनेरिष्टः' इत्यादिवचनन्तु कुलचन्द्रेणैतत् ( ३।२।७६ ) सूत्रं व्याचक्षमाणेन दुर्गवाक्यप्रबोधे उपस्थापितम्। तत्रोच्यते "स्वरित-ञितः कर्त्रभिप्राये क्रियाफले" ( १।३।७२ ) इति पाणिनीयं सूत्रम्, एतेन कर्त्रभिप्राय एव क्रियाफले स्वरितञिद्भ्यो धातुभ्य आत्मनेपदमापद्यते। शार्ववर्मिकञ्च सूत्रमस्ति "इन्-ञ्-यजादेरुभयम्" ( ३।२।७६ ) इति। अस्मिन् सूत्रे कर्त्रभिप्राय एव क्रियाफल आत्मनेपदं स्यादिति नाचार्यस्याग्रहो लक्ष्यते। दृश्यते च—'मरीचीन् वितनुते' इत्यादावफलवत्यपि कर्तर्यात्मनेपदम्, 'स्वं यज्ञं यजति'

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इत्यादौ फलवत्यपि कर्तरि च परस्मैपदमिति । एतस्मादेव हेतोः "कर्त्रभिप्राय एव क्रियाफले" इति वाक्यमनुपन्यस्य शर्ववर्माचार्यः पाणिनिमतेन सह स्वीयं विसंवादं प्रदर्शितवान् । तदर्थमुक्तम्—

विशेषः पाणिनेरिष्टः सामान्यं शर्ववर्मणः ।
सामान्यमनुगृह्णन्ति तत्राचार्यपरम्परा ॥ इति ।

आत्मनेपद-परस्मैपदसंज्ञयोरन्वर्थतामवगस्य "कर्त्रभिप्राये क्रियाफले" इत्यंशः सूत्रे आचार्येण परित्यक्त इति प्रतिभाति । अन्वर्थसंज्ञायाः प्रायोवृत्तित्वात् क्वचिद् दृष्टो व्यभिचारः समाधेयः ( कलापचन्द्रः ३।२।७६ ) । एवमुपर्युक्तसूत्रवचनेन धातुपाठस्थवचनेन च साधितायां धातूनामुभयपदव्यवस्थायां नावश्यकता प्रतिभाति धातुवृत्तावेतद्विषयकवचनोपन्यासस्य । पाणिनीये उभयपदव्यवस्थाविषये "स्वरितञितः…" ( १।३।७२ ) इत्यादि तदीयं सूत्रमेवोदाह्रियते, न तु तदीयं किञ्चिद् धातुवृत्तिवचनमपि ।

अयं भावः—पाणिनिना "स्वरित–ञितः कर्त्रभिप्राये क्रियाफले" ( १।३।७२ ) इति सूत्रवचनेनैव स्वीयमते विज्ञापिते "चुरादिवृत्तौ तत्कथनात् कर्त्रभिप्राये क्रियाफले आत्मनेपदम्, तदभावे परस्मैपदं जायते" इति कथनं तदीयानुशासनस्यानभिज्ञतामेव परिचाययति । तस्मादुद्धृतवचनेन शर्ववर्माचार्यस्य धातुवृत्तिकर्तृत्वं न साधयितुं शक्यते ।

कातन्त्रैकदेशिना वररुचिकात्यायनेनावश्यमेव शार्ववर्मिकधातुपाठस्य व्याख्यानमारचितमिति "ह्रस्ववानयम्, उतोऽयुरुनु ( ३।७।३८१ ) इत्यत्रास्यापि ग्रहणमिति कात्यायनव्याख्यानात्" ( मनोरमा—णु स्तवने ६५२ ) इति रमानाथशर्मोक्तवचनेन स्पष्टं परिलक्ष्यते । तदीयं व्याख्यानं साम्प्रतं नोपलभ्यते ।

तत्त्वावगमबलेन कातन्त्रदुर्गे सिंहवन्निःशङ्कं विहरता दुर्गसिंहेन शार्ववर्मिकधातुपाठस्य परिष्कारः कृत इत्येकेन मनोरमोक्तवचनेन वक्तुं शक्यते । तद् यथा—"दुर्गसिंहस्त्वमूनैकयोगं कृत्वा वैकल्प्ये पठति नाह्वानरोदनयोः" ( कदक्रद आह्वाने रोदने च ४६६ ) इति ।

अन्यत्राप्युक्तवचनेनेदं प्रतीयते ( मनोरमा—घुषिर् कान्तिकरणे ४५६, चक तृप्तौ )

धातुविषये विविधमतानि 'दुर्ग-दौर्ग' इतिनामनिर्देशेनोद्धृतानि दृश्यन्ते । यथा—

"तथा च 'क्लेश भाषणे' इति चान्द्रं सूत्रम्, 'क्लेश बाधने' इति दौर्गम् ( क्षीरत० १।६३७-३८ ) । अत्रायं धातुर्यद्यपि क्षीरस्वाम्यादिभिर्न पठ्यते, तथापि मैत्रेय–चन्द्र–दुर्गैः पठितत्वात् 'शमीगर्भादग्निं मन्थति'–इत्यादिदर्शनाच्चास्त्येव (मा० धा० वृ०, मन्थ विलोडने १।३७)।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

दौर्गास्तु नोपधमनिदितं पठन्तीति स्वामी ( मा० धा० वृ०, आङः शसि इच्छायाम् १।४०७ ) इति ।

तदीयोऽपि धातुपाठो नृदृष्टिपथमायाति । दौर्ग एव धातुपाठस्त्रिविष्टपप्रदेशे (तिब्बते) शाक्यपण्डितैः शार्ववर्मिकधातुपाठनाम्ना कातन्त्रधातुसूत्रनाम्ना वा व्यवह्रियते स्मेति क्षीरतरङ्गिण्यां ( पृ० २३२ ) डा० ब्रूणो लिबिशोक्तवचनमनुसृत्य गुरुपदहालदारेण निर्दिष्टम् (व्या० द० इति; पृ० ४०९, टिप्पणी ) ।

परिष्कृतस्य कातन्त्रधातुपाठस्य स्वयमाचार्यदुर्गसिंहेन वृत्तिरपि कृतासीदित्यत्रास्ति निम्नाङ्कितं वचः प्रमाणम् । यथा—

"दन्दशनमिह दन्तशूककर्तृका क्रियाभिधीयत इति दुर्गसिंहव्याख्यानाद् दन्दशन इति पाठोऽनुमीयते" ( मनोरमा, खर्द दशने २० ) इति । "दुर्गादयस्तु ईदनुबन्धपाठः परप्रसिद्धयैव परो हि जन जनने इति भाषायां न प्रयोजयति । अस्माकन्तु द्वयोरेव ग्रहणम्" ( मनोरमा ५३१ ) इति च । कातन्त्रव्याख्यातारः परशब्देन प्रायः पाणिनिं स्मरन्ति । दन्दशनेत्यादिदुर्गसिंहोक्तवचनस्य, 'अनुमीयते' इति पदस्य चोपन्यासेन विरोधः प्रतीयते, ग्रन्थस्याभावे तदीयवचनोपन्यासस्यासम्भवात् , ग्रन्थस्य प्रत्यक्षे सत्यनुमानस्यानुपपत्तेश्च । अत्रेत्थं समाधेयम्—उपर्युक्तं दौर्गं वचनं क्वचिदन्यत्र दृष्टं रमानाथेनेहोद्धृतम् , आहोस्विदाचार्यान्तरस्य कस्यचिन्मतमुपन्यस्य दुर्गसिंहेन यद् व्याख्यातं तदेवेह प्रदर्शितमिति ।

"दुर्गत्रिलोचनवृत्तावयं नास्ति" ( मनोरमा, मृग अन्वेषणे ७२७ ) इत्यत्र दुर्गत्रिलोचनप्रणीताया धातुपाठवृत्तेरेवोल्लेख इति प्रतिभाति ।

आचार्येण त्रिलोचनदासेन दौर्गधातुवृत्तिमाधारीकृत्य तदीयधातुपाठस्य सम्भवतो वृत्तिर्विरचितासीत् । एतस्य वृत्तिकर्तृत्वे मनोरमोक्तानि सन्ति कानिचित् प्रमाणानि । यथा—

"पवर्गपञ्चमादिरिति त्रिलोचनः" ( मुछ प्रमादे ६० ), "नायमस्तीति दुर्गत्रिलोचनौ" ( वेल्ल गतौ १८० ), "दृ विदारणे इति क्रैयादिकस्येह पाठो मानुबन्धार्थो न पुनः प्रकृत्यन्तरमभिधानात्" इति त्रिलोचनादयः ( ५२२ ), "चात् प्रकृतायां गतौ" इति त्रिलोचनादयः ( वेणृ ज्ञानचिन्तानिशामनेषु च ५७३ ), "वृदिति त्रिलोचनः । वस्तुतस्त्वत्र वृच्छब्दो नास्ति, वृत्तौ रुदादिः पञ्चको गण इति व्याख्यानात् ( ६५१ )' इत्यादि ।

"'धातुपारायणे तु त्रिलोचनेन खञ्जातीति दर्शितम् , तच्च लेखकप्रमाद एवेति' ( क० च० ३।२।६६ ) इति वचनेन त्रिलोचनदासेन धातुपारायणाख्यं किञ्चिद् व्याख्यानं

८

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कृतमिति निश्चीयते। प्रदर्शितं मतं वर्द्धमानेन कातन्त्रविस्तरे निर्दिष्टमिति रमानाथेनाप्युद्धृतम्[१]।

मुस खण्डने (दि० ११६) इति धातोर्व्याख्याने सायणाचार्येणाऽऽत्रेयस्यैकं कातन्त्रीयं मतमुपन्यस्तम्, तेनात्रेयः कातन्त्रधातुपाठस्य वृत्तिं रचयामासेति यत् कल्पितं युधिष्ठिरमीमांसकेन, तत् तस्याऽदूरदर्शित्वमेव द्योतयति (सं० व्या० शा० इति०, भा०२, पृ० ६८)। सायणाचार्यो निर्दिशति—"आत्रेयस्तु कातन्त्रे मूर्धन्यान्तोऽयम्। तथा च 'राघवस्यामुषः कान्ताम्' इति भट्टिकाव्ये प्रयोगश्चेति पाठान्तरमप्याह" (मा० धा० वृ०) इति।

अयमाशयः—कातन्त्रधातुपाठे खण्डनार्थको 'मुस' धातुर्मूर्धन्यान्तः पठित इत्यात्रेयाचार्योक्तवचनस्य प्रदर्शनार्थं सायणाचार्येण तदीयः पाठ उद्धृतः, न तु कातन्त्रधातुव्याख्याने आत्रेयेण 'मुस' इत्यत्र मूर्धन्यान्तः पाठोऽङ्गीकृत इति तदुद्धृतवचनेन विज्ञायत इति। अन्यथा "मुसलमिति। अस्मादेवौणादिकः कलप्रत्यय इति वदतोरात्रेयमैत्रेययोरन्येषामप्यमुं सान्तं पठतां भ्रमिमस्योरुच्चोपधाया इति मसेर्मुसलव्युत्पत्तिरनार्षेति मतम्" इत्यत्र सायणाचार्यं आत्रेयस्य सान्तत्वपक्षोऽभिमत इति वक्तुं न शक्नुयात्।

यं धातुपाठमवलम्ब्य रमानाथशर्मणा 'मनोरमा' नाम्नी वृत्तिः प्रणीता स न शार्ववर्मिकः इति विज्ञायते। सन्ति केचिदत्र हेतवः, यथा—

१—टीकाकारेण दुर्गेण 'चुरादेश्च' (३।२।४५) इति सूत्रव्याख्याने युजादि-प्रीञन्तं द्विचत्वारिंशदेव धातवो युजादिगणे पठिताः, परमत्र 'दृभ सन्दर्भे' (१३३३) इत्यधिकोऽप्येको धातुः पठ्यते, अन्ते च 'ढुढि' धातोरपि (१३४७) अन्वेषणार्थे पाठो दृश्यते। तेन शार्ववर्मिक-धातुपाठे तावन्त एव धातव पठिता इति विज्ञायते।

२—'बृहिर् शब्दे च' (२४८) इति धातोर्व्याख्याने रमानाथेनोच्यते—"अस्य पाठः सूत्रकारासम्मत एव। व्यवच्छेद्याभावे 'बृंहेः स्वरेऽनिटि वा' (४।१।६८) इत्यस्यानर्थक्यप्रसङ्गात्" इति। अत्र सूत्रकारो महर्षिर्वररुचिर्विज्ञेयः, कृत्प्रकरणस्य तेनैव प्रणीतत्वात्। यदि शर्ववर्माचार्येण 'बृहि वृद्धौ' (२४७) इत्येतस्माद् भिन्नः 'बृहिर् शब्दे च' इत्यपि धातुः पठ्येत, तर्हि 'बृहि' इत्यनेन बृंहक इत्यादेः 'बृहिर्' इत्यनेन च बर्हक इत्यादेः सिद्धौ सत्यां महर्षिर्वररुचिः 'बृंहकः, बर्हकः' इत्यादौ विकल्पेन नकारलोपार्थं 'बृंहेः स्वरेऽनिटि वा'

---

१. धातुपारायणे तु खजातीत्युदाहृतमिति विस्तरवृत्तावुक्तम् (मनो० १०४७) इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(४।१।६८) इति सूत्रं नारचयेत्। 'बृहिर्' इत्यस्य गुरुमत्त्वाभावे 'बृहि' इत्यस्य न्वागमे कृते गुरुमत्त्वात् तस्माद् भावेऽङि 'बर्हा' इत्येतस्यैव सिद्ध्यर्थं प्रणीते सूत्रे 'बर्हा' इत्येवोदाहरणं तत्र दद्यान्न तु बर्हकः, बृंहक इत्यादि। सूत्रे 'स्वरे-अनिटि' इति पदयोः पाठश्च व्यर्थः स्यात्।

३—डा० ब्रूणोलिबिशमहोदयेन क्षीरतरङ्गिण्यामन्ते यो हि शार्ववर्मिको धातुपाठ उद्धृतः, तत्र दद-मन्थादिधातूनामनुल्लेखादत्र च तेषां वर्तमानत्वात् तदीयो धातुपाठः कश्चिदन्य एवासीदिति प्रतीयते।

दुर्गसिंहपरिष्कृतोऽपि नायं धातुपाठः प्रतिभाति। यतो हि—

"दुर्गसिंहस्त्वमूनेकयोगं कृत्वा वैक्लव्ये पठति, नाह्वानरोदनयोः" (मनोरमा ४६६), "वलपाठस्तु दुर्गसम्प्रदायविजृम्भितः" (मनो० १६२), "दुर्गस्तु भासने इत्यस्यार्थमाह (मा० धा० वृ०) शुभ शम्भ भाषणे हिंसायां च" (म्वा० २४७), 'यदाह दुर्गः—तिक तिग षिघ रि क्षि चिरि जिरि दाश दृ दुङ् हिंसायाम् छान्दसाश्चामी परस्मैभाषा उदात्ताः" (मा० धा० वृ०, स्वा० ३०) इत्यादावुद्धृतं दौर्गमतं नानुसरति धातुपाठोऽयम्। अयं धातुपाठः 'कातन्त्रगणमाला' इति नाम्ना वङ्गदेशे प्रसिद्धः एतेनैव नाम्नाप्रकाशित-श्चापि दृश्यते।

निर्दिष्टेभ्य आचार्येभ्यो भिन्नैरपि कैश्चिदाचार्यैः कातन्त्रधातुपाठो व्याख्यातः, परं मतान्तरबाहुल्यस्य प्रदर्शनेन धातुनिर्णयो न यथायथं कर्तुं शक्यते स्म तत्रेति रमानाथोक्त-वचसा प्रतीयते। धातूनां निर्णयायैव रमानाथशर्मणो मनोरमाकृतो प्रवृत्तिर्जातेति तदुक्तेन प्रयोजनेन विज्ञायते।

यथा—

प्रायेण धातुवैषम्यात् सर्वेषां घूर्णते शिरः।
या तत्क्रियायै प्रभवेत् सैव वृत्तिर्मनोरमा॥
भूरि सूरिकृता वृत्तिर्भूयसी युक्तयुक्तिका।
निश्चेतुं धातवस्तस्यां न शक्यास्तेन मे श्रमः॥ इति।

## हस्तलेखानां परिचयः

१—जम्मूस्थ-पुस्तकालये नागराक्षरेषूपनिबद्धः पञ्चविंशतिपृष्ठात्मकोऽपूर्णो हस्तलेखः '८६ घ' अङ्काङ्कितो वर्तते। प्रायेण भ्रष्टपाठा अत्र दृश्यन्ते। नागराक्षरमध्ये शारदाक्षराण्यपि क्वचिद् योजितानि।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

२—श्रीनगरस्थ-सर्वकारीयपुस्तकालये सङ्गृहीतकातन्त्रलघुवृत्तेर्हस्तलेखस्य (६०७ ग्रन्थाङ्कितस्य) मध्ये उपन्यस्तः शारदाक्षरमयो धातुपाठः पाणिनीय-धातुपाठमनुसरतीति दशमेऽत्र गणे चुरादिके, येनाक्षरसमाम्नायमित्यादिलेखाद् विज्ञायते। धातूनां क्रमोऽपि पाणिनीयधातुपाठक्रमानुसारी।

३—वाराणसीस्थे सरस्वतीभवने चत्वारो हस्तलेखा वर्तन्ते बङ्गलिप्याम्। तत्र त्रयोऽपूर्णा एकश्च सम्पूर्णः सुवाच्यश्चास्ति। अपूर्णाः—३८५६८, ३६६६३, ३६८८० संख्याङ्किताः। पूर्णः—३६३३७। अत्राप्यनेके भ्रष्टाः पाठाः सन्ति। केचिद् धातवो न पठ्यन्ते ये मुद्रिते धातुपाठे उपलभ्यन्ते। केचिच्चातिरिक्ता अपि पठ्यन्ते, ये मुद्रिते न दृश्यन्ते।

मन्ये, उपलब्धेषु धातुपाठेषु कातन्त्रीयदृशानुरूपं केनचिदाचार्यान्तरेणैव धातुपाठोऽयं प्रतिसंस्कृत इति। रमानाथेन संस्कृत इति तु वक्तुं न शक्यते—"उछि, उछी इति प्रमादात् पठितौ, तुदादिपाठादेव रूपद्वयस्य सिद्धत्वात् (६२) भ्वादौ तुम्प-तुम्फ पाठोऽयुक्त एवात्र पाठादेव रूपद्वयस्य सिद्धत्वात् (८८०), अत्र वृत्पाठो नास्त्येव, वृत्तौ तृम्फादि-समाप्त्यर्थं शुम्भान्तानामित्युक्तत्वात्" (८८५) इत्यादि मनोरमायां तदुक्तिबलात्।

रमानाथशर्मणः स्याद्यन्त-प्रयोगसाधकः शब्दप्रयोगनामकोऽपरोऽपि ग्रन्थ आसीद् यमाधारीकृत्य श्रीगुरुनाथशर्मणा शब्दरूपकल्पद्रुमः प्रणीत इति ग्रन्थान्ते तेनैवोक्तम्। यथा—

सुनकान्वयजातेन विद्यानिधिपक्षाश्रिता।
काव्यतीर्थोपनामश्रीगुरुनाथद्विजन्मना ॥
शब्दव्युत्पत्तिलिप्सूनामुपकृत्यै यथामति।
रमानाथकृतं शब्दप्रयोगमवलम्ब्य च ॥
ग्रन्थो नाम्ना शब्दरूपकल्पद्रुमः प्रणीयते ॥ इति।

ग्रन्थस्यास्य टिप्पणीषु कालापमतानि दुर्गकविराजादिनामभिरुद्धृतानि दृश्यन्ते।

रमानाथशर्मणा व्याख्याते कातन्त्रधातुपाठे जुहोत्यादेरदाद्यन्तर्गतत्वान्नवैव गणा दृश्यन्ते। उक्तमपि संगृह्य सम्पादकेन श्रीगुरुनाथशर्मणा—

भ्वद-दिव-षु-तुदाद्याश्च रुध-तन-क्री-चुरादयः।
इमे नव गणा ज्ञेया धातूनां शार्ववर्मिके ॥ इति।

एतेषु गणेषु सन्ति केचिदन्तर्गणा येषु विशेषं किञ्चित् कार्यं विधीयते, ते च सम्पादकेनेत्थं संगृहीताः—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भ्वादौ द्युतवृताद्याश्च घट-ज्वल-यजादयः ।
अदादौ भा-जक्ष-रुद्र-जुहोत्याद्याः प्रकीर्तिताः ॥
दिवादौ पुष-रधाद्याश्च तथा मुह-शमादयः ।
तुदादौ मुच-तृन्फाद्याः कुटाद्याश्च प्रकीर्तिताः ॥
क्र्यादौ प्वादिस्तथा ल्वादिश्चुरादिषु युजादयः ।
अदन्ताश्च विनिर्दिष्टा इमेऽन्तर्गणसञ्ज्ञकाः ॥ इति ॥

अन्तर्गणानां धातुसंख्या प्रदर्श्यते—

| गणाः | अन्तर्गणाः | धातुसंख्या | गणाः | अन्तर्गणाः | धातुसंख्या |
|---|---|---|---|---|---|
| भ्वादिः | (१) द्युतादिः | २२ | तुदादिः | (१४) मुचादिः | ०८ |
| ,, | (२ वृतादिः | ०५ | ,, | (१५) तृन्फादिः | १८ |
| ,, | (३) घटादिः ( षानुबन्धाः ) | १४ | | | |
| ,, | ,, ( मानुबन्धाः अमन्तादीन् विहाय ) | ४५ | (अष्टादशानां मध्येऽष्टसु नोपधेष्वेव नलोपाभाव उपपद्यते इत्यष्टावेव ते मन्तव्या इति टीकाकारादिमतम् ) | | |
| ,, | (४) ज्वलादिः | ३३ | ,, | (१६) कुटादिः | ३५ |
| ,, | (५) यजादिः | ०६ | | | |
| अदादिः | (६) भादिः | १३ | क्र्यादिः | (१७) प्वादिः | २२ |
| ,, | (७) जक्षादिः | ०५ | ,, | (१८) ल्वादिः | २१ |
| ,, | (८) रुदादिः | ०५ | चुरादिः | (१९) युजादिः | ४४ |
| ,, | (९) जुहोत्यादिः | २४ | ( टीकाकारः 'इभ' सन्दर्भे ( १३३३ ), ''ढुढि' अन्वेषणे (१३४७) इति धातुद्वयं न पठति तेन तन्मते ४२ द्विचत्वारिंशन्-मिता एव धातवो युजादौ बोद्धव्याः ) | | |
| दिवादिः | (१०) पुषादिः | ६४ | | | |
| ,, | (११) रधादिः | ०८ | | | |
| ,, | (१२) मुहादिः | ०५ | | | |
| ,, | (१३) शमादिः | ०८ | ,, | (२०) अदन्ताः | ८४ |

## प्रयोजनम्

१. ( द्युतादिः )

पा० =लुङि विकल्पेन परस्मैपदभावः = द्युद्भ्यो लुङि ( १।३।९१ ) ।

,, =च्लेरङादेशः =पुषादिद्युताद्यॢदितः परस्मैपदेषु ( ३।१।५५ ) ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कात० = यथासम्भवमुभयपदवत्त्वम् ।

,, = अण्प्रत्ययः = पुषादिद्युताद्य्लृकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै (३।२।६२) ।

२. ( वृतादिः )

पा० = विकल्पेन परस्मैपदम् = वृद्भ्यः स्यसनोः ( १।३।९२ ) ।

, = इडागमस्य निषेधः = न वृद्भ्यश्चतुर्भ्यः ( ७।२।५९ ) ।

कात० = इटः प्रतिषेधः = अनात्मनेपदस्थात्तु वृतादेरिड् न स्ये सनि, श्वस्तन्यां च क्रपेनैव ।

,, = इटः प्रतिषेधः = कृतादेर्वा सेऽसिचि ( कात० वृ० ३।७।३७६ वा० ) ।

३. ( घटादिः )

पा० = अङ् प्रत्ययः = षिद्भिदादिभ्योऽङ् ( ३।३।१०४ ) ।

,, = उपधाया ह्रस्वः = मितां ह्रस्वः ( ६।४।९२ ) ।

कात० = अङ् प्रत्ययः = षानुबन्धभिदादिभ्यस्त्वङ् ( ४।५।३६ ) ।

,, = उपधाया ह्रस्वः = मानुबन्धानां ह्रस्वः ( ३।४।१८८ ) ।

४. ( ज्वलादिः )

पा० = विकल्पेन णप्रत्ययः = ज्वलितिकसन्तेभ्यो णः ( ३।१।१४० ) ।

कात० = ,, ,, = वा ज्वलादिदुनीभुवो णः ( ४।२।१३६ ) ।

५. ( यजादिः )

पा० = सम्प्रसारणम् = वचि-स्वपि-यजादीनां किति ( ६।१।१५ ) ।

कात० = सम्प्रसारणम् = स्वपि-वचि-यजादीनां यण्परोक्षाशीःषु ( ३।४।१२६ ) ।

६. ( भादिः )

पा० = × = आच्छीनद्योर्नुम् ( ७।१।८० ) इत्यत्राऽवर्णान्तादेवाऽङ्गाद् 'भाती, भान्ती' इत्यादौ विकल्पेन नुम् विधीयते न तु भादिगणस्य निर्देशः ।

कात० = विकल्पेन नकाराभावः = तुदभादिभ्य ईकारे ( २।२।१८७ ) ।

७. ( जक्षादिः )

पा० = अभ्यस्तसञ्ज्ञा = जक्षित्यादयः षट् ( ६।१।६ ) ।

कात० = ,, = जक्षादिश्च ( ३।३।८७ ) ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

८. ( रुदादिः )

पा० = इडागमः = रुदादिभ्यः सार्वधातुके ( ७।२।७६ ) ।

,, = ईडागमः = रुदश्च पञ्चभ्यः ( ७।३।९८ ) ।

कात० = ,, रुदादिभ्यश्च ( ३।६।३५५ ) ।

,, = इडागमः = रुदादेः सार्वधातुके ( ३।७।३६६ ) ।

९. ( जुहोत्यादिः )

पा० = शपः श्लुः = जुहोत्यादिभ्यः श्लुः ( २।४।७५ ) ।

कात० = द्विर्वचनम् = जुहोत्यादीनां सार्वधातुके ( ३।३।८९ ) ।

१०. ( पुषादिः )

पा० = च्लेरङादेशः = पुषादिद्युताद्य्लृदितः ( ३।१।५५ ) ।

कात० = अण्प्रत्ययः = पुषादिद्युताद्य्लृकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै ( ३।२।६२ ) ।

११. ( रधादिः )

पा० = वैकल्पिक इडागमः = रधादिभ्यश्च ( ७।२।४५ ) ।

कात० = ,, ,, = रधादिभ्यश्च ( ४।६।५१२ ) ।

१२. ( मुहादिः )

पा० = ×.

कात० = विरामव्यञ्जनादावन्तस्य गकारः = मुहादीनां वा ( २।३।१६१ ) ।

१३. ( शमादिः )

पा० = घिनुण्प्रत्ययः = शमित्यष्टाभ्यो घिनुण् ( ३।२।१४१ ) ।

,, = दीर्घः = शमामष्टानां दीर्घः श्यनि ( ७।३।७४ ) ।

कात० = दीर्घः = शमादीनां दीर्घो यनि ( ३।६।३३० ) ।

कात० = घिणिन्प्रत्ययः = शमामष्टानां घिणिन् ( ४।४।२६६ ) ।

१४. ( मुचादिः )

पा० = नुमागमः = शे मुचादीनाम् ( ७।१।५९ ) ।

कात० = नकारागमः = मुचादेरागमो नकारः स्वरादनि विकरणे ( ३।५।२४५ ) ।

१५. ( तृन्फादिः )

पा० = नुमागमः = शे तृन्फादीनामुपसंख्यानं कर्तव्यम् ( का० वृ० ७।१।५९वा० ) ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कात० = अनि नानुषङ्गलोपः = अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ( ३।६।२६५ )।
( जिघ्रतेर्वा ( ३।५।२६४ ) इत्यतोऽनुवृत्तस्य 'वा' इत्यस्य व्यवस्थित-विभाषात्वात् )।

१६. ( कुटादिः )
पा० = ङिद्भावः = गाङ्कुटादिभ्योऽञ्णिन्ङित् ( १।२।१ )।
कात० = गुणाभावः = कुटादेरनिनिचट्सु ( ३।५।२४३ )।

१७. ( प्वादिः )
पा० = ह्रस्वः = प्वादीनां ह्रस्वः ( ७।३।८० )।
कात० = ,, = प्वादीनां ह्रस्वः ( ३।६।३४७ )।

१८. ( ल्वादिः )
पा० = निष्ठातकारस्य नकारः = ल्वादिभ्यः ( ८।२।४४ )।
कात० = ,, ,, ॥ ल्वाद्योदनुबन्धाच्च ( ४।६।५२४ )।

१९. ( युजादिः )
पा० = धृषादिः = विकल्पेन णिच्प्रत्ययः = आ धृषाद्वा ( गणसू०चु० २०० )।
कात० = विकल्पेनेन्प्रत्ययः = 'अथ विकल्पेनन्ता' इति चुरादौ यजेः पूर्वं वचनम्।

२०. ( अदन्ताः )
उभयत्रोपधावृद्ध्यभावः।

धातुषु विंशतिरनुबन्धा विशेषकार्यविधानाय संयोजिता दृश्यन्ते, तेषां प्रयोजनं प्रदर्श्यंते—

१. ( आ )—'हुर्च्छा कौटिल्ये' ( ५७ )।
पा० = निष्ठायां नित्य इडागमस्याऽभावः = आदितश्च ( ७।२।१६ )।
,, = ,, वैकल्पिक ,, ,, = विभाषा भावादिकर्मणोः ( ७।२।१७ )।
कात० = ,, ,, ,, ,, = भावादिकर्मणोर्वा ( ४।६।५२२ )।
,, = ,, नित्य ,, ,, = आदनुबन्धाच्च ( ४।६।५२१ )।

२. (इ)—'कुथि पुथि-युथि-लुथि हिंसा संक्लेशनयोः' (७)।
पा० = नुमागमः = इदितो नुम् धातोः (७।१।५८)।
कात० = नकारागमः = अनिदनुबन्धानामगुणेऽनुषङ्गलोपः ( ३।६।२६५ ) इत्यत्रेदनुबन्धानाम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कात० = ,, अनुषङ्गलोपस्य वर्जनाद् ज्ञायते इदनुबन्धानां नकारागमो भवतीति ।

, = ,, वृत्तिकारटीकाकारयोरभिमतम् ।

३. ( इर् ) 'श्च्युतिर् क्षरणे' ( ५ ) ।

पा० = वैकल्पिकश्च्लेरङादेशः = इरितो वा ( ३।१।५७ ) ।

कात० = अद्यतन्यामण्प्रत्ययः = इरनुबन्धाद् वा वक्तव्यम् ( कात० वृ० ३।२।६२ वा० )

४. ( ई ) 'चिती सञ्ज्ञाने' ( २ ) ।

पा० = इडागमस्य निषेधः = श्वीदितो निष्ठायाम् ( ७।२।१६ ) ।

कात० = ,, ,, = न डी-श्वीदनुबन्धवेटामपतिनिष्कुषोः (४।६।५२०) ।

५. ( उ ) 'षिधु गत्याम्' ( ८ ) ।

पा० = विभाषा इडागमः = उदितो वा ( ७।२।५६ ) ।

का० = ,, ,, = उदनुबन्धपूक्लिशां क्त्वि ( ४।६।५१४ )

६. ( ऊ )—'षिधू शास्त्रे माङ्गल्ये च' (६) ।

पा० = विकल्पेनेडागमः = स्वरति-सूति-सूयति-धूञूदितो वा ( ७।२।४४ ) ।

कात० = ,, ,, = स्वरति-सूति-सूयत्यूदनुबन्धात् ( ४।६।५१३ ) ।

७. ( ऋ )—'खादृ भक्षणे' ( १० ) ।

पा० = उपधाह्रस्वस्य निषेधः = नाग्लोपिशास्वृदिताम् ( ७।४।२ ) ।

कात० = ,, ,, = न शास्वृदनुबन्धानाम् ( ३।५।२६१ ) ।

८. ( लृ )—'गम्लृ-सृप्लृ गतौ' ( २७६ ) ।

पा० = च्लेरङादेशः = पुषादिद्युताद्यॢदितः ( ३।१।५५ ) ।

कात० = अद्यतन्यामण्प्रत्ययः = पुषादिद्युताद्यॢकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै ( ३।२।६२ ) ।

९. ( ए ) 'कटे वर्षावरणयोः' ( ८३ ) ।

पा० = वृद्धिनिषेधः = एदनुबन्धानाञ्च ( कात० वृ० ३।६।२७३ वा० ) ।

१०. (ओ)—'ओप्यायी वृद्धौ' ( ४१३ ) ।

पा० = निष्ठातकारस्य नकारः = ओदितश्च ( ८।२।४५ ) ।

कात० = ,, ,, = ल्वाद्योदनुबन्धाच्च ( ४।६।५३४ ) ।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

११. (क्)—'इक् स्मरणे' ( ६२८ ), 'ओहाँक् त्यागे' ( ६८७ )।

पा० = विशेषणम् = अधीगर्थदयेशां कर्मणि ( २।३।५२ )।

१. ,, = ,, = इण्वदिकः ( का० वृ० २।४।४७ वा० )।

कात० = ,, = इण्वदिकोऽपि ( ।त० वृ० ३।४।२०७ वा० )।

पा० = 'ओहाङ्०—ओहाक्' इति द्वयोरेव ग्रहणम् = हश्च व्रीहिकालयोः (३।१।१४८)।

२. कात० = ,, ,, ,, ,, = हः कालव्रीह्योः (४।२।१४८)।

,, = ,, ,, ,, ,, = हाग्रुहोरवधौ न ( )।

१२. ( ङ् ) 'कुङ्-खुङ्-गुङ्-घुङ्-ङुङ्-उङ् शब्दे' ( ४५० )।

पा० = आत्मनेपदम् = अनुदात्तङित आत्मनेपदम् ( १।३।१२ )।

कात० = ,, = कर्तरि रुचादिङानुबन्धेभ्यः ( ३।२।७६ )।

१३. ( ञ् )—'वेञ् तन्तुसन्ताने' ( ६११ )।

पा० = कर्त्रभिप्राये क्रियाफले आत्मनेपदम् = स्वरितञितः कर्त्रभिप्राये क्रियाफले (१।३।७२)।

कात० = उभयपदम् = इन्—ञ्-यजादेरुभयम् ( ३।२।७३ )।

१४. ( ञि )—'ञितृष पिपासायाम्' ( ७६६ )।

पा० = क्तप्रत्ययो वर्तमानार्थे = ञीतः क्तः ( ३।२।१८७ )।

कात० = ,, ,, = ञ्यनुबन्ध-मति-बुद्धि-पूजार्थेभ्यः क्तः ( ४।४।३११ )।

१५. ( ट् )—'धेट् पाने' (२६४)।

पा० = ङीप्प्रत्ययः = टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः (४।१।१५)।

कात० = ईप्रत्ययः = नदाद्यन्चिवाह्यन्स्यन्तृसखिनान्तेभ्य ई (२।४।२५६)।

१६. ( टु )—'टुनदि समृद्धौ' (२५)।

पा० = अथुच्प्रत्ययः = ट्वितोऽथुच् (३।३।८९)।

कात० = अथुप्रत्ययः = ट्वनुबन्धादथुः (४।५।३८४)।

१७. ( डु )—'डुलभष् प्राप्तौ' ( ४७२ )।

पा० = क्त्रिप्रत्ययः = ड्वितः क्त्रिः ( ३।३।८८ )।

कात० = त्रिमक्प्रत्ययः = ड्वनुबन्धात् त्रिमक् तेन निर्वृत्ते ( ४।५।३८५ )।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

१८. (ण्)—'दाण् दाने' (२६६)।

पा० = दाणो यच्छादेशः = पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठ-मनयच्छपश्यच्छधौशीयसीदाः (७।३।७८)

कात० = ,, ,, = दाणो यच्छः (३।३।३६)।

१६. (प्)—'दैप् शोधने' (२६३)।

पा० = घुसंज्ञाया निषेधः = दाधा घ्वदाप् (१।१।२०)।

कात० = दासंज्ञाया निषेधः = अदाब् दाधौ दा (३।१।८)।

२०. (ष्) 'त्रपूष् लज्जायाम्' (३८३)।

पा० = अङ् प्रत्ययः = षिद्भिदादिभ्योऽङ् (३।३।१०४)।

कात० = ,, = षानुबन्धभिदादिभ्यस्त्वङ् (४।५।३६६)।

अयमनुबन्धसङ्ग्रहः—

इवर्णोवर्ण आदेदोद्दद्लृदिर्ञिट्टुटनड्डुषाः।
क—ण—ङ—पाश्चैव धातूनामनुबन्धाः प्रकीर्तिताः॥ इति।

अत्र 'चिरि जिरि' (८४२) इत्यादिषु 'स्रु' (२७४) इत्यादिष्वेकस्वरसंपृक्तेषु च धातुषु इकारादिरनुबन्धो नाद्रियते, यथोक्तम्—

दीधी–वेवी–दरिद्रोर्णु–जागर्तीनां चिरेर्जिरेः।
एकस्वरकधातूनां नानुबन्धो विधीयते॥ इति।
(मनो० ६५२ उद्धृ०)

धातुपाठेऽस्मिन् पादोनाष्टादशशतमिता (१७७५) धातवो दण्डकरीत्या प्रायेण पठिताः, तत्र प्रतिगणं परस्मैपदि-आत्मनेपदि-उभयपदिनो धातव एकत्रैव समायोजिताः। रमानाथशर्मणा स्वीयव्याख्याने धातूनां बहूनि पाठान्तराणि मतान्तरनिर्देशपुरस्सरं प्रदर्शितानि, एकैकस्य हि धातोर्लोकप्रयोगानुसारेण सम्भावितानां बहूनामर्थानां पाठोऽशक्यत्वान्नोचितः, इत्येक एव प्रसिद्धोऽर्थः पठ्यते[1]। 'षट अवयवे' (६७) 'गडि वदनैकदेशे' (१३१)

१. क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः।
प्रयोगतो हि मन्तव्या अनेकार्था हि धातवः॥ (मनो० १३४७)।
निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्॥ पञ्जी० ३।४।१४७

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इत्यादौ धात्वर्थनिर्देशो द्रव्यवाचकैः शब्दैः कृतः, तत्र तद्द्रव्यसमवेतक्रियैव धात्वर्थोऽवगन्तव्यः[1]। पूर्वाचार्येण केनचिद् द्रव्यार्थनिर्देशे कृतेऽपि कथन्न परवर्तिभिर्धातुकारैस्तत् संशोध्य क्रियार्थो दर्शित इत्याशङ्कायामेवं समाधेयम्—पूर्वाचार्यमतप्रदर्शनाय तदीयः पाठः संरक्षित आचार्यैरिति। कृत्येनानेन धातुकाराणामज्ञतैव परिलक्ष्यते। तदुक्तम्—

नाम्नः सत्त्वप्रधानस्य धातुकारोऽज्ञ एव हि।
शब्द-वक्त्रैकदेशादेर्धात्वर्थत्वमवोचत[2] ॥ इति।
(मनो० १३१)

'अवोचत' इत्यत्रात्मनेपदं कर्मव्यतिहारे प्रतीयते, तेन धातुकारा यत् परस्परं क्वचिद् द्रव्येण धात्वर्थं निर्दिशन्ति तेन सर्वे त अज्ञा एवेत्यर्थः। रमानाथाचार्यः 'पर'शब्देन प्रायः पाणिनिमेव स्मरति[3]।

मनोरमा-टीकागताः केचिद् विचाराः प्रस्तूयन्ते।

१—गत्यर्थकस्य 'षिधु' धातोः (८) निरनुबन्ध एव पाठो निष्ठायामिडर्थं कार्यः, तेन काशिकाप्रसाधितं 'सिधितम्' इत्यप्युपपत्स्यते।

२—शब्दार्थकं 'नर्द' धातुं केचिण्णोपदेशं मन्वते। यद्यपि पाणिनीयसम्प्रदाये महा-[4]भाष्यकारेण काशिकाकारेण[5] च 'नर्द'धातुः णोपदेशेभ्यः पृथक् कृतः, तथापि श्रूयते सङ्क्षिप्तसारव्याकरणे 'णोपदेशोऽयमुच्यते' इति, तदेव मतमत्रोपस्थापितमिति संलक्ष्यते। णोपदेशफलं तूपसर्गादसमासे नकारस्य णत्वमिति टीकाकारः—

"अपिशब्दविषयास्तु – उपसर्गाण्णोपदेशस्य, प्रणमति, परिणमति, प्रणायकः, परिणायकः" (कात० वृ० टी० २।४।२५४) इत्यादि।

---

१. 'यत्र यत्र द्रव्यनिर्देशस्तत्र तत्समवेता क्रिया लक्ष्यते, इति मैत्रेयः (मनो० ९७) इति।

२. व्या० द० इति०, पृ० ४०७।

३. स्वरार्थ इति परः, अस्यायमभिप्रायः –"शप् कर्तरीति सूत्रेण, शपि 'तुदादिभ्यः शः' इत्यनेन च शप्रत्यये उच्चारणगतमेदोऽस्तीति" (मनो० ८८०) इति।

४. सर्वे नादयो णोपदेशाः, नृति-नन्दि-नर्दि-नविक-नाटि-नाधृ-नृवर्जम् (म० भा० ६।१।६५) इति।

५. सर्वे नादयो णोपदेशाः, नृ-नन्दि-नर्दि-नवक-नाटि-नाथृ-नाधृवर्जम् (का० वृ० ६।१।६५) इति। सर्वे नादयो णोपदेशाः, नृति-नन्दि-नर्दि-नविक-नाटि-नटि-नृ-नाथृ-नाधृवर्जम्—(कात० वृ० ३।८।४१९) इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

३—'अर्द गतौ याचने च' ( १६ ) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् पीडार्थोऽपि गृह्यते, प्रयुक्तश्चापि—"रक्षःसहस्राणि चतुर्दशार्दीत्" इत्यादिः।

४—'खर्द' धातुरिह ( २० ) दशनार्थे, पाणिनीये तु दन्दशूकार्थे पठ्यते। "खर्दति मूलकं पान्थः" इत्युद्धृत्य टीकाकारेण दशनशब्दस्य दन्तकर्तृकक्रियार्थोऽभिहितः। दशन-शब्दस्य प्रयोगेण सामान्या दशनक्रिया ज्ञायते, दन्दशनशब्दस्य तु प्रयोगेण दशनक्रिया-यामतिशयस्तेन च गर्हितत्वमाख्यायते। अयं भावः---येषां प्राणिनां दशनस्य स्वभावस्त एव खर्दनक्रियाविशिष्टा उच्यन्ते, नेतरे। गर्हितत्वद्योतनस्येष्टत्वाद्। दन्दशूकार्थे एव धातोरस्य पाठः समीचीनः ( दुर्गसिंहस्यापि दन्दशनमेवार्थोऽभिमत इति टीकाकारो-ऽनुमिनोति )।

५—'बिदि अवयवे' ( २३ )। धातोरस्य केवल उप्रत्ययान्तो 'बिन्दुः' इति प्रयोगः सम्मतष्टीकाकारस्य, असम्मताश्च त्याद्यन्ताः प्रयोगा.। काश्यपमते–'अति-अदि-इदि-बिदि-गडि' इत्येतेषां पञ्चधातूनां तिङन्ताः प्रयोगा न भवन्ति। सम्मतामतेन बिदि-भिद्योरेव तिङन्ता प्रयोगा न सन्तीति सायणाचार्यो निर्दिशति। प्रायेणाचार्यास्तिङन्त रूपाण्युदाहरन्त्येषाम्। रमानाथेनापि 'अति-अदि-इदि' इत्येतस्य धातुत्रितयस्य त्याद्यन्त-रूपाण्युदाहृतानि ।

६—'कुत्सार्थके णिदि' धातौ ( २४ ) णकारोपदेशो वैचित्र्यार्थ उक्तः। 'प्रनि-निन्दिषति नो भूयः' इति भट्टिप्रयोगदर्शनात् त्यादिप्रत्ययेष्वपि मैत्रेयाभरणसम्मताकारा विकल्पेन णत्वविधानमङ्गीकुर्वन्ति। तन्मतं "कृत्यचः" ( ८।४।२९ ) इत्यतः कृति-पदस्या-ऽनुवर्तनात् 'वा निंस-निक्ष-निन्दाम्' ( ८।४।३३ ) इत्यनेन वैकल्पिकं णत्वं कृत्प्रत्ययेष्वेव भवतीति व्याख्यानात् सायणाचार्येण निरस्तम्। णोपदेशत्वादस्य नित्ये णत्वे प्राप्ते 'वा निंस-निक्ष-निन्दाम्' ( ८।४।३३ ) इत्यनेन विकल्पविधानं युज्यते, इति णोपदेशः सार्थकः।

७—समृद्धयर्थकस्य 'टुनदि' धातोः ( २५ ) 'नन्दते च कुलं पुंसाम्' ( मार्क० पु० ) इत्यत्रात्मनेपदरूपं गणकृतस्याऽनित्यत्वादित्युक्तम्।

८—अपनयनार्थकः 'लुञ्च' धातुः ( ४७ ) पाणिनीयकातन्त्रयोर्निष्ठायामिड्विधानाय निरनुबन्ध एवाभिमतः। उदितम् ( उकारानुबन्धम् ) पठतां मतं सायणाचार्येणानार्षमुद्घो-षितम्। 'उदितो वा' ( ७।२।५६ ) इत्यनेन क्त्वाप्रत्यये इड्विकल्पे सिद्धे क्तप्रत्यये

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'यस्य विभाषा' ( ७।२।१५ ) इत्यनेनेडभावे 'राजदन्तादिषु परम्' ( का० वृ० २।२।३१ ) इत्यत्र पठितं 'लुञ्चितम्' ( मृष्टलुञ्चितम् ) इति पदं न सिध्येदित्यर्थः ।

९—गत्यर्थक 'षस्ज' धातोः ( ४९ ) 'षश्च' इति पाठान्तरं प्रस्तौति रमानाथः। सायणाचार्यस्तु 'तमजिह्वा असश्चत' इति प्रयोगमुपन्यस्य 'सश्चि' इति धातुं मतान्तरेणोपन्यस्यति ( भ्वा० १२१ )। 'यदभिप्रायेषु सज्जन्ते' इति भाष्यप्रयोगादुभयत्र धातुरयमात्मनेपद्यपि स्वीकृतः।

१०—स्तेयकरणार्थकस्य 'ग्लुचु' धातोः ( ५० ) मतान्तरेण गत्यर्थमपि स्वमतेन धातोरनेकार्थमवलम्ब्य समर्थयति ।

११—'म्लेच्छ' धातुः ( ५२ ) व्यक्तवागर्थे पठितोऽपि 'म्लेच्छो ह वा एष यदपशब्दः' ( म० भा०, पस्प० ) इति भाष्यवचनेनाव्यक्तवागर्थक एष धातुरिति टीकाकारस्य हृदयं प्रतिभाति। तथा च—"अन्तर्वेद्यामसौ विद्वान् न म्लेच्छति धृतव्रतः" इति कविरहस्ये हलायुधः। चौरादिकोऽपि 'म्लेच्छ[1]' धातुः ( ११२७ ) मूले व्यक्तवागर्थे एव पठितः ।

१२—पाणिनीये उञ्छार्थकस्य 'उछि' धातोर्विवासार्थकस्य 'उछी' धातोश्च भ्वादौ पाठस्य प्रयोजनम् "अनुदात्तौ सुप्पितौ" ( ३।१।४ ) इत्यनेनाऽनुदात्तस्वर इत्युक्तं व्याख्याकारैः सायणादिभिः। कातन्त्रव्याकरणस्य लौकिकप्रयोगानुशासनफलकत्वात् स्वरकार्याभावेन भ्वादौ पाठो नावश्यक इत्येव हृदि कृत्वाह रमानाथः—

"उछि उछी इह प्रमादात् पठितौ तुदादिपाठादेव रूपद्वयस्य सिद्धत्वात्" ( ९२ ) इति ।

१३—'पठ' धातुः ( १११ ) न केवलं स्वतन्त्ररूपेणाध्ययने वर्तते किञ्च-अर्थतः शब्दतश्च गुरुतो ग्रहणेऽपि वर्तते, यथा—पठति शास्त्रं शिष्यः, इत्याह व्याख्याकारः ।

१४—हिंसा—भाषणार्थकौ 'शुभ-शुम्भ' धातू ( १४० ) द्राविडा दन्त्यादी पठन्ति, तन्मतं गदसिंहवचनानुसारेणानार्षमिति सङ्केतितम्[2]। पाणिनीयेऽपि नैतौ दन्त्यादी पठ्येते ।

---

१. 'ह्लप' व्यक्तायां वाचि (११२६), 'म्लेच्छ' च (११२७)।

२. दन्त्यादी इति द्राविडाः, सुम्भो निसुम्भश्चासुर इति व्याचक्षते च। तदनार्षमिति गदसिंहः—तालव्यस्यैवेष्टत्वात ( मनो० १४० ) इति ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

१५— नामिनो वोंरकुर्छुरोर्व्यंञ्जने" ( ३।८।४१८ ) इत्यनेन व्यञ्जनादीनामेव धातूनां रवोरुपधाया दीर्घो भवति न तु स्वरादीनामिति कुलचन्द्रमतमाद्रियमाण ईर्ष्यार्थक-'घुर्ष्य' धातोः ( १६३ ) ह्रस्वादिपाठेऽङ्गीकारेऽपि 'ईक्ष्य-ईर्ष्य' इति धात्वोर्दीर्घादिमेव पाठं मनुते टीकाकारः[१] । मूले तु ह्रस्वादी पठितौ ।

१६—जयार्थक'–जि' धातोः (१६१) पञ्चम्याः ( लोटः ) एकवचनबहुवचनयोः प्रयोगो भाषायां न जायते, इति शरणदेवो मनुते, भाष्यादौ तत्प्रयोगस्याऽनुक्तत्वात् । 'तु' स्थाने तातणः ( तातङः ) प्रयोगस्तु जायत एव । यथा—

उत्पन्नसर्वसङ्कल्पो नष्टनिःशेषचेष्टितः ।
भावगम्यनयः कोऽपि जयताद् वागगोचरः ।। इति ।

पञ्चम्याः ( लोटः ) उत्तमपुरुषे प्रयोगाभावस्य ज्ञापनायोच्यते—

जयतेर्नास्ति पञ्चम्या उत्तमः पुरुषः क्वचित् ।
वचेरन्त्यं तुशन्तॄङां प्रयोगो नाभिधीयते ।। इति ।
( मनो० १६१ )

१७—पालनार्थे एव पठितोऽपि 'अव' धातुः ( २०२ ) अन्यैः ( पाणिनीयैः ) 'रक्षण-गति-कान्ति–प्रीति-तृप्ति-अवगम–प्रवेश-श्रवण–सामर्थ्य-याचन-क्रीडा-इच्छा–दीप्ति-अवाप्ति आलिङ्गन-हिंसा-दहन-भाव-वृद्धि' इत्यूनविंशत्यर्थेषु पठ्यमानष्टीकाकारस्य रमानाथस्याभिमतः । प्रीतौ यथा—'न मामवति सद्वीपा' इति ।

१८—[२]स्मृतिध्यानयोर्भेदेऽपि भेदानादरणात् स्मृ-ध्यै' इति धातुद्वयस्य ( २७२ ) चिन्तार्थे एव पाठः कृतः ।

१९—श्रवणार्थकस्य 'श्रु' धातोः ( २७८ ) स्वादौ पाठस्य युक्तत्वेऽपि भ्वादौ पाठस्तस्य 'श्रुवः शृ च' ( ३।१।७४ ) इत्यस्याऽनित्यत्वं बोधयति । तथा च दृश्यते प्रयोगः—'श्रवति राक्षसनिःस्वनमाहतः' इति । कैश्चित् स्वादावेव पठ्यते ।

---

१. 'नामिनो वोंरित्यादिना सर्वत्र दीर्घ इति गोविन्दभट्टः । कुलचन्द्रस्तु व्यञ्जनादेरेव दीर्घः, स्वरादेर्न स्यात्, अतो गणकारोऽपीदमुपेक्ष्य 'ऊर्ज' प्रभृतीनां दीर्घत्वमधीतवानित्याह' ( मनो० १६३ ) इति ।

२. यद्यपि पूर्वानुभूतार्थविषयकं ज्ञानं स्मृतिः, हितानाप्तेर्ध्यानं चिन्ता । अत्र करणसाधनेन ध्यानपदेनानुकूलप्रयत्नाभिध्यानम्, यथाह मणिकण्ठः—प्रयत्नविशेषश्चिन्ता, ज्ञानविशेषः स्मृतिः । अन्यत्र तु चिन्तानन्तरं स्मृतिस्ततो ध्यानं पुनः पुनरनुसन्धानमिति क्रमः, तथापि भेदानादरणादेकार्थतोक्ता—'स्मरामि वानीरगृहेषु सुप्तम्' इति रघुवंशे ( १३।३५) ( मनो० २७२ ) इति ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

२०—'स्पर्ध' धातुः ( १६३ ) संहर्षार्थे पठितो न तु संघर्षार्थे, संघर्षस्य स्पर्धार्थकत्वेऽपि घर्षणार्थत्वात्। यथा चोक्तम्—

'स्पर्धा–संघर्षयोरुक्तः संघर्षः शब्दवेदिभिः' इति व्याडिः, इति।

संहर्षः=परपराभवेच्छा। 'सम्' पूर्वस्य 'हृषु' अलीके ( २३१ ) इत्यस्य घञि रूपम्। पाणिनीये संघर्षार्थे पठ्यते।

२१—पाणिनीयेऽपठितः 'क्षुदि' धातुराप्लवनार्थे ( २६७ ) पठ्यते, तस्य 'क्षदिस्कुदि' इति पाठान्तरमपि प्रदर्श्यते। आप्लवनार्थकधातूनां रूपाणीत्थं वेदितव्यानि—

क्षुणाति च क्षुणीते क्षुणोत्याप्लवनेऽपि च।
क्षन्दते क्षुन्दते वापि षडाप्लवनवाचिनः॥ इति भट्टमल्लः।

२२—'क्लिदि' परिदेवने ( २६, ३०३ ) इत्यस्योभयपदिष्वेव पाठादुभयपदित्वे सिद्धे परस्मैपदिष्वात्मनेपदिषु च पृथक् पाठः पाणिनीयतन्त्रप्रसिद्धया कृतः। अफलवत्यपि कर्तर्यात्मनेपदं फलवत्यपि कर्तरि च परस्मैपदं यथा स्यादित्यर्थः।

२३—'बृहिर्' शब्दे च ( १४८ ) इति धातुर्न कात्यायनस्य सम्मतः—'बृंहेः स्वरेऽनिटि वा' ( ४।२।६८ ) इति सूत्रेण नलोपस्य विधानात्। अन्यथा–इकारानुबन्धस्य धातोर्बृंहक इति रूपे, अनिकारानुबन्धस्य च 'बृहिर्' धातोर्बर्हक इति च रूपे सिद्धे सूत्रकरणं व्यर्थं स्यात्। 'बर्हा'[1] इत्येतस्य सिद्धये सूत्रे कृते 'स्वरेऽनिटि' इति पदद्वयस्य निरर्थकत्वाद् व्याख्याकारैर्दुर्गादिभिर्बृंहकः, बर्हक इत्याद्युदाहृतत्वाच्च नायं धातुः सूत्रकारस्य कात्यायनस्य सम्मत इति प्रतिभाति।

२४—सेचनार्थे पठितः 'षच' धातुः ( ३३८ ) 'ब्रुवि-शासिगुणेन च यत्सचते' ( म० भा० १।४।५१ ) इत्युद्धरणेन समवायार्थेऽपि सम्मतष्टीकाकारस्य।

२५—'तिज' धातुः ( ३४८ ) निशाने क्षमायां चेत्यर्थे पठ्यते, तत्र निशानार्थे त्यादिप्रत्यया न भवन्ति।

२६—'स्फुट' विकसने इत्यस्योभयपदिष्वेव पाठादुभयपदप्रयोगे सिद्धे परस्मैपदिषु ( ११० ) आत्मनेपदिषु (३५२) च पृथक्त्वेन पाठादफलवत्यपि कर्तर्यात्मनेपदं फलवत्यपि च कर्तरि परस्मैपदं सम्पद्यते।

---

१. बृंहबृह्योरमी साध्या बृंहबृहादयो यदि।
तदा सूत्रेण वैयर्थ्यं न बर्हा भावके स्त्रियाम्॥ ( क० च० ४।२।६८ ) इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

२७. भ्रमणार्थकयोः 'घुण-घुर्ण' इत्यनयोर्धात्वोः ( ३६६, ८२६ ) भ्वादावात्मनेपदिषु तुदादौ च परस्मैपदिषु पाठेनाकर्त्रभिप्राये क्रियाफले आत्मनेपदम्, कर्त्रभिप्राये च क्रियाफले परस्मैपदं जायत इति पाणिनीयानां मतमनुसृत्यात्रापि तथैव पाठः कृतः, अन्यथा—उभयपदिष्वेव पाठः क्रियेत ।

२८. 'पण' धातुः ( ४०१ ) व्यवहारार्थकः स्तुत्यर्थकश्च । तत्र स्तुत्यर्थ एवाऽऽयप्रत्ययो भवतीति काशिकाकारमतमनुसृतम् । तत्र चोक्तम्—'स्तुत्यर्थेन पनिना साहचर्यात् तदर्थः पणिः प्रत्ययमुत्पादयति न व्यवहारार्थः' ( गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८ ) इति । व्यवहारार्थे आयप्रत्ययाभावः कुमारसम्भवे दृश्यते, यथा—

जित्वा परीरम्भमथाधरोष्ठैः पुनः पणस्वेत्युदिता भवेन । इति ।

भाषावृत्तिकारादिभिर्मतमिदमनार्षमुद्घोषितम् ।

२९. 'क्नूयी' धातुः ( ४११ ) शब्दार्थेऽत्र पठितः, पाठान्तराणि तदुदाहरणानि चोपस्थापयन् रमानाथस्तत्पक्षीयोऽपि प्रतिभाति । रामाचार्यमते ( सम्भवतो रामतर्कवागीशः ) 'क्नुयी' धातुरिति विज्ञापयन्नुदाहरणाभावात् तन्मतं नाद्रियते ।

३०. 'कल्ल' धातुः ( ४२० ) कातन्त्रे शब्दार्थे[1], माधवीयधातुवृत्तावव्यक्तशब्दार्थे, क्षीरतरङ्गिण्याञ्चाऽशब्दार्थे ( तूष्णीम्भावे ) पठ्यते । गजानन-बालकृष्णपल्सुलेमहोदयेन कातन्त्रमतेऽपि प्रदर्शितोऽव्यक्तशब्दार्थः[2] पाणिनीयधातुपाठसमीक्षायामप्यनुसृतः ( पृ० ७३ ) । यद्यपि प्राचीनकातन्त्रधातुपाठेऽयमप्यर्थः सम्भाव्यते, तथापि चान्द्रसम्मतोऽव्यक्तशब्दार्थ इति रमानाथवचनेन तच्चिन्त्यं प्रतीयते ।

३१. सेवनार्थकस्य 'षेवृ' धातोः ( ४२८ ) आत्मनेपदिषु पाठेऽपि गणकृतानित्यत्वात् परस्मैपदेऽपि प्रयोगो जायते, यथा—'नीचं समृद्धमपि सेवति नीच एव' 'स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः' । इत्यादि ।

---

१—"कल्लते लोकः = न शब्दायते इत्यर्थः" ( मनोरमा ४२० ) इति ।

२—अर्थभेदप्रदर्शनस्थलेऽव्यक्तशब्दार्थे 'कल्ल' धातुः पाणिनि-चन्द्र-काशकृत्स्नकातन्त्रसम्मत इति प्रदर्शितम् । ( A concordance of Sanskrit Dhatupathas, P. 167 )



CC-0. Sampurnanand University Collection. Digitized by eGangotri

३२. कुलचन्द्र-रत्नमतिमतेन कुत्सार्थे दीप्त्यर्थे चाविशेषात् 'कासृ' धातोः (४४०) आम्प्रत्ययो भवति, शरणदेवस्तु कुत्सार्थ एवाऽऽम्विधानमनुमन्यते, तेन कुत्सार्थे "कासाञ्चक्रे" इति, दीप्त्यर्थे च 'चकासे' इति रूपम्।

३३. 'बल्ह' प्राधान्यपरिभाषणहिंसादानेषु (४५०), बर्ह च (४५१)। अत्र चकारेणोक्तेषु प्राधान्यपरिभाषणहिंसादानेष्वर्थेषु पृथग्योगाद् भाषणादिकमेवानुकृष्यते, तस्मात् क्वचिद् भिन्नयोगः स्पष्टार्थमपि क्रियत इति ज्ञायते। सायणाचार्यस्तु प्रधानार्थे पठति (मा० धा० वृ०, भ्वा० ४१३)। काशकृत्स्ने 'बल्ह' धातुरुक्तेष्वर्थेषु 'बर्ह' धातुस्तु प्रयत्नार्थे पठ्यते (काश० धा० पा०, भ्वा० ५४४–४५)।

३४. वितर्कार्थकस्य 'ऊह' धातोः (४५४) आत्मनेपदिषु पाठेऽपि 'अनुक्तमप्यूहति पण्डितो जनः,' 'यशः समूहन्निव दिग्विकीर्णम्' इत्यादौ गणकृतानित्यत्वेन न दोषः। वृत्तिकारादयस्तु[१] (दुर्गसिंहादयः) 'उपसर्गादस्यत्यूह्योर्वा' (३।२।७६–२१) इत्यत्राकर्मकयोगं मन्वते—अस्यत्यूहावकर्मकावेव विकल्पेन रुचादी (आत्मनेपदिनौ) भवत इत्यर्थः, तेन सकर्मके परस्मैपदमेव। वररुच्यादयस्त्वकर्मकयोगं नाङ्गीकुर्वन्ति, तेन तन्मते सकर्मकयोगेऽपि विकल्पेनात्मनेपदमुपपद्यते[२]। "पूर्वे गणकारा येषां प्रत्येकं मकारानुबन्धत्वमुपदिष्टवन्तस्ते घटादयो मानुबन्धा लाघवायात्रान्वाख्याता अर्वाग्गणकृतेत्यर्थः।" (टीका ३।४।१८०) इति। "पूर्वाचार्यास्तु घटादीनां षानुबन्धत्वं प्रतिपदमेव पठितवन्तः" (टीका ४।५।३९९) इति च। पाणिनीये षानुबन्धा धातवस्त्रयोदश, तत्र वैक्लव्यार्थे 'क्लदि' धातुरधिकः पठितः, आह्वानरोदनार्थकौ 'कद-क्रद' धातू न पठितौ यौ

---

१. "अकर्मक इत्येव—निरस्यति शत्रून्, समूहति पदार्थान्" (कात० वृ० ३।२।७६–२१) इति।

२. "अस्यतेरात्मनेपदार्थमूहतेश्च परस्मैपदार्थं वा वचनम्—समूहति पदार्थमिति। ननु कथमत्र परस्मैपदम्—ऊहतेर्नित्यमात्मनेपदित्वात् प्रत्युदाहरणेऽप्यात्मनेपदस्यैव योग्यत्वात्? सत्यम्, समूहते पदार्थानित्यात्मनेपदेनैव प्रत्युदाहरणम्, प्रत्युदाहरणे परस्मैपदपाठस्त्वशुद्ध एव, अतः कुलचन्द्रोऽपि सकर्मकयोस्तु यथाप्राप्तमित्युक्तवान्। वस्तुतो वररुच्यादिमतेऽकर्मकाधिकारो नास्त्येव, अतः सकर्मकेऽपि विकल्प इति। अकर्मकाधिकारेऽपि चकारात् (अकर्मकश्च ३।२।७६–३०) सकर्मकेऽपि विकल्पः। अत एव 'अनुक्तमप्यूहति पण्डितो जनः' इति भारविः। अत्राऽपिशब्दस्योपसर्गाभावादायिलोपे परस्मैपदमिति कथम्—"सन्ततं तिमिरमिन्दुरुदासे, यशः समूहन्निव दिग्विकीर्णम्" इति? सत्यम्, विस्मृतलक्षणत्वादिति कुलचन्द्रः। अन्ये तु पच्यते मासानिविवत् पूर्वं कर्माविवक्षयेत्याहुः। अस्मन्मते चकारादित्युक्त एव सिद्धान्तः। (कवि० ३।२।७६–२१) इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

